# देवालयं गत्वा आगच्छाम

| | |
|---|---|
| रमेशः - मालति, अद्य रात्रिनिमित्तं पाकं मा करोतु । उपाहारमन्दिरं गच्छाम । | Malathi, don't cook for the night. We shall go to a hotel. |
| मालती - किमर्थम् ? | Why, what is the matter ? |
| र - अद्य विशेषदिनं खलु ! किं भवती न स्मरति ? | Don't you remember today is a special day ? |
| मा - कः विशेषः अद्य ? अहं न स्मरामि खलु ! | What special ? I don't remember. |
| र - भवत्याः जन्मदिनाङ्कः कः इति जानाति वा भवती ? | Don't remember your birthday ? |
| मा - हाँ, मया विस्मृतम् आसीत् । अद्य एव खलु मम जन्मदिनम् ! | Oh ! I had forgotten. Today is my birthday. |
| र - तदर्थम् एव अहम् उक्तवान् - 'अद्य गृहे पाकः मास्तु, उपाहारमन्दिरं गच्छाम' इति । | That's why I said, don't cook for the night; we shall go to a hotel. |
| मा - जन्मदिने उपाहारमन्दिरगमनं किमर्थम् ? पायसं करोमि । गृहे एव आनन्देन भोजनं करवाम । उपाहारमन्दिरगमनेन वृथा धनव्ययः । तत्रत्यं खाद्यम् आरोग्यस्य हानिकारकम् अपि । | Where is the need to go to a hotel on a birthday ? I Can prepare sweets at home and we can eat a hearty meal. We spend money needlessly by going to a hotel and our health also gets upset. |
| र - तथैव भवतु, तर्हि सायङ्काले देवालयं गत्वा आगच्छाम । | Very well, then we will go to a temple in the evening and get back home. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्गणम् - | Court-yard | दुर्गम् - | Fort |
| अर्कपर्णानि - | Leaf of Arka plant | निःश्रेणिः - | Ladder |
| अशीतिसहस्रम् - | Eightythousand | पञ्जिका - | Torch |
| अहोरात्रम् - | Day and night | प्रज्ञाहिनः - | Unconscious |
| आभाणकम् - | Proverb | प्रतिवेशी - | Neighbour |
| आवुत्तः - | Sister's husband | प्रभवति - | Will become capable |
| आसन्नमरणः - | On death-bed | भञ्जितवन्तः - | Broke |
| उलूकः - | Owl | भित्तिः - | Wall |
| उषःकाले - | Early morning | मण्डः - | Cream |
| उषितवान् - | Stayed | मृत्तिका - | Mud |
| कशा - | Whip | लवित्रम् - | Sickle |
| काष्ठम् - | Firewood | लाक्षा - | Sealing-wax |
| कोणः - | Corner | वाटिका - | Garden |
| कौमुदी - | Moonlight | विवृतवान् - | Explained |
| चम्पकम् - | Champaka flower | वीथी - | Street |
| चित्रकः - | Cheetah | शिबिका - | Palanquin |
| जतुका - | Bat | श्यालः - | Wife's brother |
| जामाता - | Son-in-law | श्रान्तः - | Tired |
| त्वक् - | Skin | सहगामिनी - | Wife |
| दायित्वम् - | Responsibility | स्नुषा - | Daughter-in-law |

# Electronic accompaniment for screams, shouts and yodels.

They're here! An international range of safe, electronic playthings. Toys that sing, dance, walk, talk, shriek and climb. **From Mum Toys.** Just right for that li'l livewire at home.



RAP DANCER
Handy inspiration
for budding showmen... Yo!





BIRTHDAY CAKE PIANO
Happy birthday tunes for
the young-at-heart



POWER SAUCER TOP
Space-age spinners
for underage earthlings



PIANO PENCIL BOX
The sound of music
for young warblers



RAP CASSETTE
Foot-tapping rhythms for
the Michael Jackson wannabe




**HEAD OFFICE:** M.M.Toys Industries Ltd., 5, Chandra Bagh Avenue, Mylapore, Madras-4. Ph: 835151, Fax: 843919.

8018.96




## ASWINI HOMEO HAIR OIL

- ∗ Stops falling of hair.
- ∗ Prevents premature greying.
- ∗ Helps rich growth.
- ∗ Provides cooling effect to the brain.
- ∗ Non-Sticky.




## ASWINI MUSCLE OIL

- ∗ Relieves joint pains
- ∗ Relieves back aches
- ∗ Relieves muscle pains
- ∗ Relieves body pains and sprains




## ASWINI HERBEL BATH POWDER

- ∗ Cleanses sweat pores and keeps you fresh.
- ∗ Lends muscle strength.
- ∗ Preserves body - balance.
- ∗ Prevents pimples and wrinkles.
- ∗ Keeps yours skin healthy and soft.

*Lakhs are using Aswini Products why not you also try ?*

ANJU ADS

## ASWINI HOMEO & AYURVEDIC PRODUCTS LTD.,

**Moosapet, Hyderabad - 500 018. India**
**Phone : 273430 & 273607. Fax : 040-272409**




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'

## कक्ष्यासु क्रीडा

क्रीडास्पर्धानां चिन्तनमात्रेण अस्माकं स्मृतिपथम् आयाति - विशालस्य क्रीडाङ्गणस्य दृश्यम् । एषु दिनेषु भवनादीनाम् अन्तः क्रीडितुं योग्यानां क्रीडानां प्रस्तावः बहुत्र श्रूयते । किन्तु एताः क्रीडाः शालापाठ्यत्वेन कक्ष्यां प्रविष्टाः किम् ?



शालासमयसारिण्यां इतिहास-गणित-भूगोल-समाजशास्त्र-विज्ञानादीनां पाठननिमित्तं यथा समयः निर्दिष्टः भवति, तथैव भाषायाः अध्ययननिमित्तम् अपि कश्चन कालांशः निर्दिष्टः भवति । केषुचित् विद्यालयेषु सङ्गीतनृत्यकलादीनां निमित्तम् अपि कालांशः निर्दिष्टः भवति । एतन्मध्ये कदाचित् शिक्षकाः छात्रान् क्रीडाङ्गणं नीत्वा क्रीडयन्ति । महान् आतपः, महती वृष्टिः वा भवतु, छात्राणाम् उत्साहः तु न्यूनः न भवति क्रीडासु । यतः अस्मिन् क्रीडावधौ छात्राः पठनविषयं पूर्णतया विस्मृतवन्तः भवन्ति । अतः एव इदानीं शालाव्यवस्थापकाः चिन्तयन्तः सन्ति यत् - क्रीडा अपि अध्ययनविषयत्वेन व्यवहारपथे आनेतव्या इति ।

एतेषु दिनेषु कटकमध्ये केनचित् केन्द्रमन्त्रिणा उक्तम् - 'एतदर्थम् आयोजिता समितिः अग्रिमवर्षतः एव पाठ्यक्रमे क्रीडाकालांशयोजनार्थं यत्नं कुर्यात्, सर्वकारेण चाल्यमानेषु केन्द्रीयविद्यालयेषु नवोदयशालासु च एतस्य प्रयोगः करणीयः, अन्याः शालाः अपि एतां पद्धतिम् अनुसरेयुः इति शालाभ्यः सूचना दीयते' इति ।

क्रीडा कियता प्रमाणेन, केन प्रकारेण च पाठनीया इति ऊहितुं शक्नुमः वयम् । उदाहरणार्थं पादकन्दुकक्रीडा (फूट्बाल्) । एतस्यां क्रीडायां गणः कथं क्रियते इति, एकैकस्य अपि क्रीडासक्तस्य स्थानं, तस्य कर्तव्यं, क्रीडानियमान् च पाठयेयुः शिक्षकाः । अपि च एतस्यां क्रीडायां जयसम्पादनं न वैयक्तिकम्, अपि तु गणस्य इति बोधयेयुः ।

क्रीडामनोभावः महता परिश्रमेण प्राप्तव्यः गुणः । तथापि अग्रिमदिनेषु व्यवहारपथे आनेया एषा पद्धतिः छात्रेषु शैशवावस्थातः एव क्रीडामनोभावजननार्थं सहायिका भवेत् इति आशास्यते अस्माभिः ।

सम्पुटः - १२ अगस्ट् - १९९५ सञ्चिका - ५

प्रतिकृतिमूल्यं - रू. ५.०० * वार्षिकं ग्राहकशुल्कं - रू. ६०.००



वार्ताविशेषः -

# फ्रान्स्देशे नूतनः अध्यक्षः चितः

गतस्य 'मे' मासस्य १७ दिनाङ्के ब्याक् चिराक्वर्यः फ्रान्स्देशस्य नूतनाध्यक्षत्वेन चितः अभवत् । ततः दशभ्यः दिनेभ्यः पूर्वं निर्वाचनं प्रवृत्तम् आसीत् तत्र । एतस्मिन् निर्वाचने चिराक्वर्यः कन्सर्वेटिव्-गालिस्ट्पक्षस्य अभ्यर्थी आसीत् । सः प्रतिस्पर्धिनं समाजवादिपक्षीयं लयोनिल्जान्सन्वर्यं ५२:४८ अनुपातयुक्तैः मतैः पराजितवान् । गतेभ्यः चतुर्दशभ्यः वर्षेभ्यः फ्रान्स्देशे समाजवादिपक्षः एव शासनं कुर्वन् आसीत् । चिराक्वर्यस्य विजयस्य कारणतः स च पक्षः अधिकारात् च्युतः जातः । फ्राकोयिन् मिट्टेराण्ड्वर्यः सुदीर्घकालं यावत् फ्रान्स्देशस्य अध्यक्षः आसीत् । सः १९८१ तमे वर्षे, १९८८ तमे वर्षे च अध्यक्षीयनिर्वाचने चिराक्वर्यं पराजितवान् आसीत् । अस्वास्थ्यकारणतः सः एतस्मिन् निर्वाचने भागं न गृहीतवान् आसीत् ।

द्वितीयजागतिकयुद्धस्य (१९३९-१९४५) अनन्तरं जनरल् चार्ल्स् डिगाल्वर्यः फ्रान्स्देशस्य अध्यक्षः जातः । सः स्वदेशे सुस्थिरशासनस्य स्थापनार्थं विशेषप्रयत्नं कृतवान् । किन्तु इण्डोचीना, वियतनाम्, काम्बोडिया, लावोस् इत्यादीनाम् उपनिवेशानां कारणतः तत्र बह्व्यः गम्भीरसमस्याः समुत्पन्नाः । तासां निवारणार्थं सः सर्वप्रथमं तेभ्यः उपनिवेशभूतेभ्यः राज्येभ्यः फ्रान्स्सेनां प्रत्यानायितवान् । तेषां राज्यानां स्वातन्त्र्यम् उद्घोषितवान् च । १९६८ तमे वर्षे सः त्यागपत्रदानपुरस्सरम् अध्यक्षपदं परित्यक्तवान् । तथापि तस्य सिद्धान्तस्य प्रभावः अनन्तरकालीनानाम् अध्यक्षाणाम् उपरि विशेषतः आसीत् एव ।

समाजवादिनेता मिट्टेराण्ड्वर्यः १९८१ तमे वर्षे फ्रान्स्देशस्य अध्यक्षः जातः । तत्समये तद्देशस्य आर्थिकी स्थितिः अतीव दुर्बला आसीत् । निरुद्योगसमस्या तीव्रतरा आसीत् । अतः एव तत्काले जनैः चिन्तितम् आसीत् यत् इदानीं समाजवादिनायकस्य चयनम् एव उत्तमम् इति । तैः एतदपि चिन्तितम् आसीत् यत् अस्मद्देशस्य भविष्यम् उज्ज्वलं भविष्यति इति । सा निरीक्षा सफला न जाता इत्यतः चतुर्दशवर्षाणाम् अनन्तरं ते शासनाधिकारं चिराक्वर्याय दत्तवन्तः ।

१९९३ तमे वर्षे यत् पार्लिमेण्ट्निर्वाचनं प्रवृत्तं तदा कन्सर्वेटिव्पक्षेण एव अधिकानि मतानि प्राप्तानि । गालिस्ट्पक्षस्य नायकः एड्वर्ड् बल्लादुरवर्यः प्रधानमन्त्री जातः । एवं हि श्रूयते यत् तेन निरुद्योगसमस्यायाः निवारणार्थं प्रयत्नः कृतः इति । किन्तु एतद्विरुद्धः अभिप्रायः अपि श्रूयते एव । बल्लादुरवर्यः अपि अध्यक्षनिर्वाचने अभ्यर्थी आसीत् । किन्तु सः प्रथमचक्रे एव पराजयं प्राप्तवान् । ततः अलैन् जुरसेवर्यः प्रधानमन्त्री जातः ।

ब्याक् चिराक्वर्यः ६२ वर्षीयः । सः ३० वर्षात्मके राजकीयजीवने द्विवारं (१९७४ तः १९७६ पर्यन्तं, १९८६ तः १९८८ पर्यन्तं च) प्रधानमन्त्री जातः आसीत् । यदा कृषिमन्त्री आसीत् तदा सः स्वादु (सेबु) फलस्य निर्यातार्थं विशेषप्रयत्नं कृतवान् आसीत् । तस्य प्रयत्नस्य परिणामतः एव फ्रान्स्देशः स्वादुफलनिर्यातक्षेत्रे द्वितीयं स्थानं प्राप्तवान् आसीत् । चिराक्वर्यः प्यारिस्नगरस्य नगरपालिकाध्यक्षः अपि आसीत् । निर्वाचने स्वादुफलम् एव तस्य चिह्नम् आसीत् ।

मे-मासस्य दशमे दिनाङ्के यः विजयोत्सवः प्रवृत्तः तत्र जनैः आशा प्रकटिता यत् देशस्य भविष्यम् उज्ज्वलं भवेत् इति । चिराक्वर्यः घोषितवान् अस्ति यत् निरुद्योगसमस्यायाः निवारणम् एव मम प्रमुखं लक्ष्यम् इति ।





# ज्येष्ठत्वम्

नागपुरनामकः ग्रामः कस्यचित् महारण्यस्य पार्श्वे आसीत् । सोमनाथः नागपुरे निवसति स्म । सः परिश्रमजनकम् अपि कार्यं सुलभतया निर्वहति स्म इति ख्यातिं प्राप्तवान् आसीत् । आवश्यकतायां सत्यां तद्ग्रामीणाः सोमनाथम् एव आश्रयन्ति स्म । तथापि सोमनाथः खेदं न अनुभवति स्म, अपि तु सन्तोषेण तेषां साहाय्यं करोति स्म ।

इदानीं सोमनाथस्य वयः पञ्चाशत्वर्षाणि । यद्यपि वयः अधिकम् अभवत्, तथापि स्वस्य उत्साहः तु न्यूनः न जातः इति सोमनाथस्य आशयः । किन्तु ग्रामीणाः कष्टजनकानां कार्याणां निमित्तं नूतनतया तद्ग्रामम् आगतं नागराजम् एवं आश्रयन्ति स्म ।

एतस्मात् अतीव खिन्नः सोमनाथः स्वखेदं पत्नीं सूर्यवतीं निवेदितवान् । तदा सा मन्दहासपूर्वकं पतिम् उक्तवती - "भवतः विषये ग्रामीणानाम् अत्यन्तं गौरवम् । इदानीं भवान् ज्येष्ठः अस्ति । अतः सर्वकार्यं प्रति अपि भवतः आश्रयणं न उचितम् इति मत्वा ग्रामीणाः नागराजेन परिश्रमजनकानि कार्याणि कारयन्तः सन्ति" इति ।

तदा सोमनाथः - "सामर्थ्यस्य वयसः च न कोऽपि सम्बन्धः । सः नागराजः युवकः स्यात् नाम । किन्तु मया कर्तुम् अशक्यानि कार्याणि कर्तुं सः अपि न शक्नोति । एतं विषयं किं ग्रामीणाः न जानन्ति ?" इति पृष्टवान् ।

तदा सूर्यवती मौनम् आश्रितवती । किन्तु सा एतं विषयं स्वपरिचितान् उक्तवती । तदा ते परिचिताः उक्तवन्तः - "वस्तुतः आश्चर्यकरी वार्ता एषा । यतः सोमनाथः स्वयौवनावस्थायाम् एतादृशानि कार्याणि कर्तुं न इच्छति स्म । अपि च कोऽपि मत्समीपं

न आगच्छन्ति इति कदापि खेदं न अनुभवति स्म सः। वयः अधिकं जातं खलु! अतः तस्य एतादृशं चिन्तनं सहजम् एव'' इति।

जनानाम् एतादृशं वार्तालापं ज्ञातवतः सोमनाथस्य खेदः द्विगुणितः अभवत्। 'अहम् इदानीम् अपि महता उत्साहेन एव अस्मि, वृद्धः न जातः' इति विषयं कथं जनाः अवगच्छेयुः, तदर्थं च कः उपायः आश्रयणीयः इति बहुधा चिन्तितवान् सोमनाथः। कदाचित् तादृशः सन्दर्भः प्राप्तः।

सोमनाथः कदाचित् ग्रामाधिकारिणः गृहस्य पुरतः कैश्चित् सह वार्तालापं कुर्वन् आसीत्। तत्र नागराजः अपि आसीत्। तावता तत्र पार्श्वग्रामस्थस्य भूस्वामिनः सहायकः आगतवान्। अनुक्षणं ग्रामाधिकारी नमस्कारपूर्वकं तं स्वागतीकृत्य पृष्टवान् - ''कः विशेषः?'' इति।

तदा पार्श्वग्रामीणः उक्तवान् - ''अहम् अस्माकं भूस्वामिनः आदेशानुसारम् अस्मद्ग्रामस्य जनसंख्या, ग्रामस्य सीमाप्रदेशः, तटाककूपादीनां स्थितिः इत्यादिकस्य विवरणं लिखितवान् अस्मि। सम्प्रति अस्माकं भूस्वामी ग्रामे नास्ति। नगरं गतः सः श्वः सायङ्काले प्रत्यागमिष्यति। मया लिखिताः विषयाः सामान्यतः त्रिशतपृष्ठात्मकपुस्तकरूपतां प्राप्तवन्तः सन्ति। एतद्विषये भवतः साहाय्यम् अपेक्ष्य अहम् अत्र आगतवान् अस्मि'' इति।

''मत्तः साहाय्यम् इच्छति भवान्? कीदृशं



साहाय्यम् इति वदतु तावत्'' इति आश्चर्येण उक्तवान् ग्रामाधिकारी।

तदा पार्श्वग्रामीणः उक्तवान् - ''भवतः ग्रामे बहवः विद्यावन्तः बुद्धिमन्तः च सन्ति इति मया श्रुतम्। मया लिखिते विषये बहवः अक्षरदोषाः सङ्कलन-व्यवकलनदोषाः च स्युः। मया लिखितस्य परिष्करणं मया एव क्रियते चेत् तत् सम्यक् न भवेत्। अतः भवद्ग्रामीणेषु यदि कश्चित् परिष्कारं करोति, तर्हि वरम् अभविष्यत्'' इति।

''अस्माकं ग्रामे तादृशः कः अस्ति? एतादृशकार्यार्थं नागराजः एव योग्यः'' इति स्वगतं वदन् ग्रामाधिकारी नागराजम् उक्तवान् - ''नागराज! भवान् एतस्य साहाय्यं करोतु, येन अग्रिमदिनेषु

भूस्वामितः भवतः यत्किमपि साहाय्यम् अपेक्षितं चेत् भवान् एतस्य साहाय्यं स्वीकर्तुं शक्नुयात्'' इति।

ग्रामाधिकारी स्वनाम न सूचितवान् इत्यतः सोमनाथः अतीव खिन्नः । यतः एतादृशानि कार्याणि बहुवारं सोमनाथेन कृतानि आसन्।

तदा नागराजः उक्तवान् - ''त्रिशतपृष्ठात्मकस्य एतस्य परिष्कारार्थं न्यूनातिन्यूनं दशदिनानां कालावकाशः आवश्यकः । अतः एतत् कार्यम् एकदिनाभ्यन्तरे समापयितुं न शक्यते मया'' इति।

एतत् श्रुतवतः भूस्वामिनः सहायकस्य निराशा अभवत्।

तदा सोमनाथः उक्तवान् - ''यदि भवताम् आक्षेपः नास्ति, तर्हि अहम् एकदिनाभ्यन्तरे एव परिष्कारकार्यं समाप्य दास्यामि'' इति।

''भवतः विषये अहं बहुधा श्रुतवान् आसम् यत् - भवान् सर्वकार्येषु अपि समर्थः इति। किन्तु भवान् वयसा ज्येष्ठः खलु! अतः भवन्तं न पृष्टवान् अहम् । भवान् एव परिष्कारकार्यं निर्वहति इति तु महान्तं सन्तोषं जनयति मम' इति वदन् भूस्वामिसहायकः आत्मना लिखितं पुस्तकं सोमनाथाय दत्तवान्।

सोमनाथः एकाग्रचित्तः सन् एकदिनाभ्यन्तरे एव समग्रं पठित्वा तत्रत्यान् लोपदोषान् परिष्कृत्य प्रतिदत्तवान्।

अनन्तरं भूस्वामिसहायकः स्वग्रामं गत्वा आत्मना लिखितं पुस्तकं भूस्वामिने



दत्तवान् । भूस्वामी सूक्ष्मं तत् परिशील्य सहायकम् अभिनन्दितवान् । एषः विषयः बहुभिः ज्ञातः अपि ।

''भूस्वामिसहायकेन लिखितस्य त्रिशतपृष्ठात्मकस्य पुस्तकस्य परिष्कारम् एकदिनाभ्यन्तरे एव अहं कृतवान् । तथापि मया किञ्चिदपि श्रान्तिः न अनुभूता'' इति सोमनाथः सर्वान् उक्तवान् ।

अनन्तरदिनेषु स्वसामर्थ्यनिरूपणार्थं सोमनाथेन बहवः अवकाशाः प्राप्ताः ।

कदाचित् ग्रामाधिकारी ज्वरपीडितः अभवत् । औषधार्थं कानिचन औषधमूलानि आवश्यकानि अभवन् । तानि औषधमूलानि चपलपुरवासिनः व्यासानन्दसकाशे एव उपलभ्यन्ते स्म, न अन्यत्र । वैद्येन उक्तानि रोगचिह्नानि व्यासानन्दम् उक्त्वा, तेन दीयमानम् औषधमूलम् आनेतव्यम् आसीत् । समस्या नाम व्यासानन्दः संस्कृतं विना अन्यां भाषां न जानाति, अन्यभाषया सम्भाषणं सर्वथा न करोति च ।

ग्रामाधिकारी औषधमूलस्य आनयनार्थं नागराजं चपलपुरं प्रेषयितुम् इष्टवान् । किन्तु चपलपुरं गन्तव्यं चेत् लवणपर्वतम् अतिक्रम्य एव गन्तव्यम् आसीत् । अतः नागराजः उक्तवान् - ''लवणमिश्रितवायुः घण्टाभ्यन्तरे एव मम आरोग्यं नाशयति । सप्ताहं यावत् प्रतिरोधकौषधं स्वीकृत्य तु अहं लवणपर्वतमार्गेण गन्तुं शक्नुयाम् । किन्तु तावान् कालः नास्ति खलु इदानीम्'' इति ।

तदा सोमनाथः - ''मम लवण-वायुसमस्या नास्ति । अतः अहं गत्वा औषधमूलानि आनेष्यामि' इति उक्तवान्,





चित्रयुतानि १५० पर्णानि चित्वा ग्रामम् आनीय पर्णमालां कृत्वा देवाय अर्पणीयम् । अनन्तरदिने तां मालां पुनरपि अरण्यं नीत्वा तस्मिन् वृक्षे एव स्थापनीयम् । येन अरण्यात् पर्णानि आनीयन्ते, तेन एव पर्णमाला अरण्यं प्रति नेतव्या । अरण्यप्रयाणं तु कष्टकरम् । पर्णानाम् आनयनम् अत्यन्तं कष्टदायकम् । अरण्ये विशिष्टवृक्षस्य अन्वेषणं , तत्र च त्रिशूलचित्रयुक्तानां पर्णानाम् अन्वेषणं तु महते क्लेशाय । एतत् कार्यं न सर्वैः कर्तुं शक्यम् । यद्यपि नागराजः एतत् कार्यं कर्तुं समर्थः, तथापि तावन्तं श्रमं वोढुम् अनिच्छन् सः उक्तवान् - 'मया न शक्यते' इति । यतः महान् परिश्रमः वोढव्यः चेत् तेन मध्ये मध्ये विश्रान्तिः स्वीकरणीया आसीत् । 'यदि तत्कार्यम् अङ्गीकृत्य निर्वोढुम् असमर्थः भवामि तर्हि पापभाक् भविष्यामि' इति भीतिः नागराजस्य ।

किन्तु सोमनाथः इतःपूर्वम् एतत् कार्यं पञ्चषवारं निरूढवान् आसीत् । अतः सः एतत् कार्यम् अङ्गीकृत्य यथाविधि निरूढवान् । तथापि सोमनाथेन लेशमात्रम् अपि क्लेशः श्रान्तिः वा न अनुभूता इति जनाः परस्परं वदन्ति स्म । पत्नी सूर्यवती अपि सोमनाथस्य साहसम् अभिनन्दितवती ।

एवं सत्यपि जनाः प्रमुखकार्यार्थं नागराजम् एव आश्रयन्ति स्म । अतः सोमनाथस्य खेदः दिने दिने अधिकः एव भवति स्म ।

कदाचित् सूर्यवती पतिम् उद्दिश्य -

तस्मिन् एव दिने ततः प्रस्थाय तत्कार्यं सम्पादितवान् च ।

पुनः कदाचित् ग्रामे देव्याः महान् उत्सवः आचरणीयः इति सङ्कल्पितम् । उत्सवदिने आदिनं पुरुषैः सर्वैः अपि वयोभेदं विना देवविग्रहस्य पुरतः जयकारः वक्तव्यः । तदपि जयकारकथनं स्थित्वा एव । न उपवेष्टव्यम् । एवं कृतं चेत् ग्रामस्य हितं सेत्स्यति अन्यथा हानिः भविष्यति इति ग्रामीणानां विश्वासः ।

तद्ग्रामात् अनतिदूरे स्थिते अरण्ये कश्चन विशिष्टः वृक्षः अस्ति । तस्य वृक्षस्य सर्वाणि पर्णानि समानाकाराणि न भवन्ति । तेषु कानिचन पर्णानि त्रिशूलाकार-चित्रयुतानि भवन्ति । त्रिशूलाकार-

"भवान् गृहे एव स्थित्वा पुराणग्रन्थान् पठन्, तस्य अर्थं मां विवृणोतु । निश्चिन्तया कालं यापयाव । जनाः भवन्तं कार्यं न वदन्ति इति यत् तेन भवता सन्तोषः अनुभोक्तव्यः । किन्तु भवान् दुःखम् अनुभवति खलु !" इति उक्तवती ।

तदा सोमनाथः उक्तवान् – "सर्वे मां ज्येष्ठं वृद्धं च मन्यन्ते । केचन तु 'भवतः वयः अधिकं जातम्' इति साक्षात् माम् एव वदन्ति । किम् अहं शय्याम् आश्रितवान् अस्मि ? तरुणैः कर्तुम् अशक्यानि अपि कार्याणि मया क्रियमाणानि सन्ति । जनाः एतत् ज्ञातुं न शक्नुवन्ति खलु !" इति ।

अथ कदाचित् पार्श्वग्रामस्थः आत्मीयः वासुदेवः सोमनाथस्य गृहम् आगतवान् । "अस्माकं ग्रामे मासद्वयात् वृष्टिः एव न जाता । कूपतटाकादीनां निर्माणे ग्रामाधिकारी आसक्तिं न दर्शयति । समस्यानिवारणार्थं महाराजसमीपं गन्तव्यम् । महाराजसमीपं गत्वा विषयः विस्तरेण महाराजं प्रति निवेदनीयः खलु ! तादृशः सम्भाषणचतुरः कोऽपि नास्ति अस्माकं ग्रामे । भवतः ग्रामे तादृशः कोऽपि चतुरः स्यात् वा ?" इति सोमनाथं पृष्टवान् वासुदेवः ।

सोमनाथस्य सामर्थ्यं वासुदेवः जानाति स्म एव । तथापि वासुदेवः सोमनाथस्य साहाय्यं न प्रार्थितवान् इत्यतः कुपितः सोमनाथः उक्तवान् – 'एतद्विषये अस्माकं ग्रामाधिकारिणं पृच्छतु' इति ।



वासुदेवः ग्रामाधिकारिणः समीपं गत्वा पुनः सोमनाथसमीपम् आगत्य उक्तवान् – 'ग्रामाधिकारिणा उक्तं यत् – नागराजः समर्थः इति, एतत् कार्यार्थं सोमनाथसाहाय्येन नागराजम् अङ्गीकारयतु इति च" इति ।

एतत् श्रुत्वा क्रुद्धः सोमनाथः उक्तवान् – "पार्श्वग्रामस्य भूस्वामिसहायकेन लिखितस्य त्रिशतपृष्ठात्मकस्य पुस्तकस्य परिष्कारम् एकदिनाभ्यन्तरे एव कृतं मया । औषधमूलानाम् आनयनार्थं लवणपर्वतः अपि मया निरायसम् आरूढः । ग्रामदेवस्य उत्सवसमये दिनत्रयं यावत् निरन्तरं कार्याणि कृतानि चेत् अपि न श्रान्तः अहम् । एतादृशे समर्थ्यवति मयि सति अपि भवता

यदि नागराजः एव अपेक्ष्यते, तर्हि भवान् एव तस्य समीपं गत्वा पृच्छतु" इति।

तदा वासुदेवः सोमनाथं परीक्षादृष्ट्या पश्यन् उक्तवान् - "एवं तर्हि ग्रामाधिकारिणा उक्तं सर्वं वास्तविकम् एव" इति।

वासुदेवस्य वचनं श्रुत्वा खिन्नवदनः सोमनाथः पृष्टवान् - "मद्विषये ग्रामाधिकारी भवन्तं किम् उक्तवान् ?" इति।

तदा वासुवेदः उक्तवान् - "कष्टकराणि कार्याणि भवान् पूर्वम् अपि कृतवान्, इदानीम् अपि कुर्वन् अस्ति। किन्तु पूर्वं तानि कार्याणि कष्टकराणि इति न भावयति स्म भवान्। लीलया करोति स्म। किन्तु इदानीं तानि कार्याणि भवान् करोति इति तु सत्यम् एव। तथापि 'कष्टकराणि कार्याणि कृतानि मया' इति भावनां प्राप्नोति भवान्। एतत् एव वार्धक्यलक्षणं नाम। वार्धक्ये विश्रान्तिः अत्यावश्यकी। अतः एव ग्रामीणाः, भूस्वामी च कार्यकथनेन भवन्तं पीडयितुं न इच्छन्ति' इति।

वासुदेवस्य वचनं श्रुतवतः सोमनाथस्य मनसि विचारः आरब्धः। 'गतेषु दिनेषु परिश्रमजनकानि कार्याणि अपि कष्टदायकानि इति न भासन्ते स्म। किन्तु इदानीं तेषु एव कार्येषु महान् परिश्रमः अनुभूयते। तथापि स्वसामर्थ्यं निरूपयितुम् इच्छन् अहं परिश्रमं सोढ्वा अपि कार्याणि कृतवान्। वस्तुतः वार्धक्यं मम अन्तरङ्गं न अङ्गीकरोति। अतः एव अहं स्वसामर्थ्यनिरूपणार्थं यतमानः अस्मि। किन्तु नागराजः न तथा। तस्य न कापि चिन्ता। सः यत् कार्यं कर्तुं शक्नोति, तत् आत्मविश्वासेन करोति। यत् न शक्यते इति चिन्तयति, तत् स्पष्टं निराकरोति। स्वसामर्थ्यनिरूपणं न इच्छति सः, तस्य आवश्यकता अपि नास्ति। मयि एव तादृशं चिन्तनम् आसीत्' इति स्वदोषं ज्ञात्वा सोमनाथः तस्मात् दिनात् आरभ्य आत्मनः सामर्थ्यनिरूपणं परित्यज्य सुखेन जीवनं यापितवान्।






(भुवनसुन्दरीकारणात् ग्रीक्जनानां ट्राय्जनानां च मध्ये आरब्धस्य युद्धस्य समाप्तिकालः सन्निहितः। उभयपक्षीयाः अपि प्रमुखयोधाः मरणं प्राप्तवन्तः। ट्राय्नगरस्य स्वायत्तीकरणार्थं रूपधरः कश्चित् उपायं चिन्तितवान्। तदनुसारं ग्रीक्जनाः काष्ठेन कश्चित् अश्वं निर्माय तस्य अन्तः कांश्चन योधान् रहस्यरूपेण स्थापितवन्तः। चौर्यनाथनामकं गुप्तचरं, काष्ठनिर्मितम् अश्वं च तीरे एव परित्यज्य ततः ते प्रतिगतवन्तः। वस्तुतः ग्रीक्जनाः न गतवन्तः, ततः किञ्चिद्दूरं गत्वा निलीय स्थितवन्तः। ट्राय्जनाः काष्ठनिर्मितम् अश्वं स्वनगरं नीत्वा विजयोत्साहम् आचरन्तः आसन्। अनन्तरम् ...)

विजयोत्साहे मग्नाः ट्राय्जनाः महता सन्तोषेण कोलाहलं कुर्वन्तः आसन्। किन्तु काष्ठनिर्मिते अश्वे उपविष्टाः ग्रीक्योधाः प्राणभयात् कम्पमानाः आसन्। दोर्दण्डस्तु निश्शब्दं रोदनम् आरब्धवान्। किन्तु साहसी नवयोधः धैर्येण उपविष्टवान्। तीक्ष्णदृष्टिना क्षिप्तस्य शूलायुधस्य अग्रभागः शिरःपर्यन्तम् आगतः चेदपि सः शान्ततया एव स्थितवान् आसीत्। अन्यच्च, कदा वा अहं बहिः गत्वा स्वपराक्रमं प्रदर्शयेयम् इति चिन्तयन् खड्गं हस्तेन गृहीत्वा अनुमतिप्राप्त्यर्थं रूपधरम् एव तदेकदृष्ट्या पश्यन् स्थितवान् आसीत् सः। यतः रूपधरः तेषां नायकः आसीत्।

भुवनसुन्दरी सायङ्कालसमये पत्या अरिभयङ्करेण सह काष्ठनिर्मितम् अश्वं द्रष्टुम् आगतवती। सा पतिं तोषयितुम् इच्छन्ती अश्वं परितः गत्वा मध्ये मध्ये तम् अश्वं




हस्तेन स्पृष्टवती । अनन्तरं च अश्वस्य अन्तः ये योधाः उपविष्टाः आसन्, तेषां पत्नीनां ध्वनिम् अनुकृतवती । तेषां नाम उच्चारितवती अपि सा । अश्वस्य अन्तः उपविष्टौ प्रतापः देवमयः च स्वनाम श्रुत्वा बहिः आगन्तुम् उद्युक्तौ । किन्तु रूपधरः तयोः बहिर्गमनं निवारितवान् ।

रात्रिः आसन्ना । सर्वत्र अन्धकारः प्रसृतः । विजयोत्साहस्य आचरणेन श्रान्ताः ट्राय्वीराः गाढनिद्रायां लीनाः अभवन् । किन्तु भुवनसुन्दरी स्वप्रकोष्ठे जागरिता एव उपविष्टा आसीत् । तस्याः प्रकोष्ठे दीपः प्रकाशमानः आसीत् । एषः ग्रीक्जनानां निमित्तम् आयोजितः सङ्केतः आसीत् ।

मध्यरात्रसमयः । चन्द्रोदयः जातः । तस्मिन् समये चौर्यनाथः मार्जारः इव विना शब्दं नगरम् अतिक्रम्य गतवान् । वज्रकायस्य स्मारकस्थानं गत्वा तत्र दीपं ज्वालितवान् । तस्मिन् एव समये समुद्रे सुदूरे स्थितानां ग्रीक्नौकानाम् आगमनं सूचयन् इव पञ्जिकां ज्वालितवान् प्रत्याम्नायः ।

सङ्केतं ज्ञात्वा राराजः स्वनौकासु दीपान् प्रज्वालितवान् । ग्रीक् नौकाः तीरम् आगताः । एतत् दृष्ट्वा प्रत्याम्नायः काष्ठनिर्मितस्य अश्वस्य समीपं गत्वा अन्तस्थान् उद्दिश्य मन्दस्वरेण – 'सर्वं सिद्धम् अस्ति' इति उक्तवान् । प्रत्याम्नायस्य वचनश्रवणमात्रेण रूपधरः दोर्दण्डम् उक्तवान् यत् – अश्वस्य द्वारम् उद्घाटयतु इति ।

दोर्दण्डः द्वारम् उद्घाटितवान् । अन्तः स्थितः कश्चित् योधः त्वरया बहिः आगतवान् । अन्धकारे त्वरया अवतीर्णः इत्यतः सः अधः पतितवान्, कण्ठाघातं प्राप्य तत्रैव मृतवान् च । अनन्तरं निःश्रेणिद्वारा ग्रीक्योधाः एकैकशः निश्शब्दम् अधः अवतीर्णाः ।

तेषु केचन, नौकाद्वारा आगच्छतां ग्रीक्जनानां निमित्तं दुर्गस्य द्वारोद्घाटनार्थं धावितवन्तः । अपरे केचन राजभवनात् बहिः निद्रां कुर्वतः रक्षकभटान् निर्दयं मारितवन्तः ।

प्रतापः सदा अपि पत्न्याः भुवनसुन्दर्याः विषये एव चिन्तयति स्म । सः पत्नीं द्रष्टुम् इच्छन् तस्याः वसतिप्रकोष्ठं प्रति गतवान् ।

क्षणाभ्यन्तरे महान् कोलाहलः आरब्धः। कौमुदीप्रकाशे ग्रीक्वीराः वीथ्यां गच्छन्तः दारुणं हननम् आरब्धवन्तः। बहुविधानि हिंसाकृत्यानि आचरितानि तैः। यद्यपि पूर्वं रूपधरः भुवनसुन्दरीं, तस्याः श्वश्रूं च उक्तवान् आसीत् यत् - निरायुधैः सह कदापि अहं युद्धं न करोमि इति। किन्तु सः स्ववचनं न पालितवान्। अपि च ग्रीकवीराः प्रतिगृहं प्रविश्य निद्रायां लीनाः महिलाः वृद्धान् च निर्दयं मारितवन्तः।

आत्मानं रक्षितुम् इच्छन्तः वर्धनः, तस्य पत्नीपुत्रादयः च कस्मिंश्चित् देवालये निलीय स्थितवन्तः। वर्धनः ग्रीक्जनैः सह सङ्घर्षार्थं सन्नद्धः। किन्तु तस्य पत्नी अश्रूणि स्रावयन्ती पतिं निवारितवती - "भवान् वृद्धः अस्ति। अतः भवान् बहिः मा गच्छतु। अत्रैव तिष्ठतु, येन भवतः प्राणाः रक्षिताः भवन्ति" इति।

वर्धनः पत्न्याः वचनम् अङ्गीकृतवान्। किन्तु तावता ग्रीक्जनाः वर्धनस्य पुत्रेषु अन्यतमं ग्रहीतुम् इच्छन्तः धावन्तः तम् अनुसरन्ति स्म। तस्मिन् क्षणे नवयोधः वर्धनस्य पुत्रं मारितवान् एव। एतत् दृष्ट्वा दुःखं सोढुम् अशक्तः वर्धनः देवालयात् बहिः आगतवान्। ग्रीक्जनाः वर्धनं गृहीत्वा आकर्षन्तः एव राजभवनसमीपं नीतवन्तः, निर्दयं मारितवन्तः च।

भुवनसुन्दर्याः वसतिगृहं प्रति प्रतापेन सह रूपधरः अपि गतवान्। तौ अरिभयङ्करेण सह बहुकालं यावत् युद्धं कृतवन्तौ। अन्तिमक्षणे भुवनसुन्दरी एव



अरिभयङ्करस्य पृष्टभागे आयुधेन घातितवती । तस्मात् अरिभयङ्करः दिवङ्गतः ।

वस्तुतः प्रतापः चिन्तितवान् आसीत् यत् - भुवनसुन्दर्याः प्राप्तिसमनन्तरं सा मारणीया इति । किन्तु तस्याः मनमोहकं सौन्दर्यं दृष्टवतः प्रतापस्य चिन्तनं परिवृत्तम् । सः हस्ते स्थितं खड्गं क्षिप्त्वा प्रीत्या भुवनसुन्दर्याः हस्तं गृहीत्वा, तां स्वनौकासमीपं नीतवान् ।



प्रत्याम्नायः यद्यपि ट्राय्जनः, तथापि सः ग्रीक्जनानां साहाय्यं कृतवान् । किन्तु एतं विषयं विस्मृत्य केचन ग्रीक्वीराः प्रत्याम्नायस्य पुत्रेषु अन्यतमं घातितवन्तः । अपरं पुत्रं मारयितुम् इच्छन्तः तम् अनुसरन्तः धावितवन्तः ते । एतत् ज्ञात्वा रूपधरः स्वजनान् - 'प्रत्याम्नायस्य कुटुम्बजनानां रक्षणम् अस्माकं कर्तव्यम्' इति बोधयन् प्रत्याम्नायस्य पुत्रं रक्षितवान् । अपि च सः प्रत्याम्नायस्य गृहस्य मुख्यद्वारे चित्रकस्य चर्म स्थापितवान् । द्वारे चित्रकस्य चर्मस्थापनं सूचयति यत् ग्रीक्जनैः तद्गृहजनानां हिंसा न करणीया इति ।

यदा ट्राय्नगरे दारुणं हननम् आरब्धम्, तदा वर्धनस्य ज्येष्ठपुत्री बुद्धिमतीदेवी आत्मानं रक्षितुम् इच्छन्ती कस्मिंश्चित् देवालये निलीय स्थितवती । तथापि ग्रीक्जनाः तां गृहीत्वा नीतवन्तः । राराजः स्ववशे तां स्थापितवान् ।

हिंसाकृत्यानि समाप्य ग्रीक्जनाः समग्रं ट्राय्नगरं लुण्ठितवन्तः । भित्तीः भञ्जितवन्तः । गृहाणि दग्धवन्तः । देवताभ्यः बलिदानं कृतम् । लुण्ठनेन यत् यत् प्राप्तम्, तत् सर्वं विभज्य स्वीकृतवन्तः ग्रीक्जनाः ।

वीरसिंहस्य पत्नी नवयोधस्य वशे आगता । वीरसिंहस्य पत्न्याः कश्चन शिशुः आसीत् । ग्रीकयोधाः तं शिशुं रहस्येन मारितवन्तः ।

प्रमोदिन्याः भविष्यविषये किं करणीयम् इति विषयम् अधिकृत्य ग्रीक्वीरेषु एव वादविवादाः प्रवृत्ताः । मरणावस्थायां स्थितः वज्रकायः स्वमित्राणि निवेदितवान् आसीत् - 'ट्राय्पतनं यदा भविष्यति, तदा मम स्मारकस्थाने बलिरूपेण प्रमोदिनीं मारयन्तु' इति ।



वज्रकायः केभ्यश्चित् दिनेभ्यः पुत्रस्य, अन्येषां च केषाञ्चित् ग्रीक्वीराणां स्वप्नद्वारा तेषु भीतिं जनितवान् आसीत् - ''यदि प्रमोदिन्याः बलिः न दीयते, तर्हि ग्रीक्सैन्यस्य स्वदेशं प्रति गमनात् पूर्वम् एव सैन्यं नाशयिष्यामि'' इति।

'प्रमोदिनी वज्रकाये नितराम् अनुरक्ता आसीत्। अतः तस्याः बलिः यदि न दीयते, तर्हि अपचारः भविष्यति' इति कांशुकः उक्तवान्। किन्तु राराजः एतं प्रस्तावं न अङ्गीकृतवान्। अपि तु सः उक्तवान् - ''एतावता एव महान् रक्तपातः जातः अस्ति। अपि च वज्रकायस्तु मृतः। इदानीम् अपि जीवन्त्याः प्रमोदिन्याः विषये वज्रकायस्य आशयः आरोपणीयः इत्यत्र न किमपि औचित्यम्। अतः तस्याः बलिदानम् उचितम् इति न भाति'' इति।

तदा अपरे केचन ग्रीक्वीराः राराजम् उक्तवन्तः यत् - भवदीयायाः बुद्धिमती-देव्याः तोषणार्थं, तस्याः सहोदरीं प्रमोदिनीं रक्षितुम् इच्छति भवान् इति।

एतस्मात् विवादात् महान् अनर्थः सम्भवेत् इति विचिन्त्य रूपधरः विवादात् तान् निवारयन् उक्तवान् - ''अयं विषयः सर्वेषाम् इच्छानुसारं निर्णीतः न भविष्यति। अपि तु प्रमोदिन्याः बलिदानं तु निश्चितम् एव'' इति।

बलिदानार्थं प्रमोदिन्याः आनयनदायित्वं रूपधरः एव निरूढवान्। वज्रकायस्य पुत्रः नवयोधः बलिकर्तृत्वेन स्थितवान्। ग्रीक्सैनिकानां समक्षं वज्रकायस्य स्मारकस्थानसमीपे प्रमोदिन्याः बलिदानं कृतम्। अनन्तरं ग्रीक्जनाः शास्त्रोक्तं प्रमोदिन्याः अन्त्यसंस्कारं कृतवन्तः।

प्रमोदिन्याः मरणानन्तरं ग्रीक्जनानां स्वदेशं प्रतिगमनार्थं अनुकूलकरं वातावरणम् उत्पन्नम्। प्रमोदिन्याः बलिदानात् शान्ति प्राप्तवान् वज्रकायस्य आत्मा एव एतादृशम् अनुकूलकरं वातावरणं कल्पितवान् अस्ति इति भावितवन्तः ग्रीक्जनाः। ते वृथा कालयापनं कर्तुम् अनिच्छन्तः स्वनौकाद्वारा स्वदेशं प्रति प्रस्थितवन्तः।

वर्धनस्य पत्नी रूपधरस्य वशे आसीत्। किन्तु सा ग्रीक्जनानाम् अनीति खण्डयन्ती

रूपधरम् अन्यान् च घोरं शप्तवती ।

एवं प्रकारेण पीडां जनयन्तीं वर्धनस्य पत्नीं निवारयितुम् अशक्ताः ग्रीक्जनाः तां हत्वा समुद्रे क्षिप्तवन्तः ।

ट्रायतः प्रतिप्रयाणकाले राराजप्रतापयोः मध्ये कलहः उत्पन्नः । 'वातावरणम् अनुकूलकरम् अस्ति । अतः इदानीम् एव प्रस्थानं करवाम' इति उक्तवान् प्रतापः ।

''बुद्धिमतीदेव्यै बलिं दत्त्वा एव गन्तव्यं खलु ! अतः किञ्चित्कालानन्तरं गच्छाम'' इति उक्तवान् राराजः ।

''किं बुद्धिमतीदेव्यै बलिदानेन लाभः कोऽपि अस्ति अस्माकम् ? किं सा वरेण अस्मान् अनुगृह्णाति ? न खलु ! अपि च सा अस्माकं शत्रून् एव उपकृतवती अस्ति'' इति उक्तवान् प्रतापः ।

एवं विवादं कुर्वन्तौ प्रतापराराजौ परस्परं दूरं गतवन्तौ । पुनः जीवने कदापि तयोः सङ्गमः न जातः एव ।

राराजः, नवयोधः, वृद्धः नवद्योतः च साक्षात् स्वस्वगृहं गतवन्तः । किन्तु प्रतापस्य मार्गे विघ्नः जातः । प्रयाणे तस्य अनुकूलकरः वायुः न आसीत् । चण्डमारुतकारणात् कष्टम् अनुभवतः तस्य नौका नष्टा अभवत् । अनन्तरं सः महता परिश्रमेण ईजिप्ट्तीरं प्राप्तवान् । बहूनां वर्षाणाम् अनन्तरं प्रतापः भुवनसुन्दर्या सह स्वगृहं प्राप्तवान् । अत्रान्तरे केनापि राराजस्य हननं कृतम् आसीत् ।

ट्रायग्रीक्युद्धस्य अन्तिमक्षणे काष्ठाश्वस्य योजनापूर्वकं ट्रायपतने प्रमुखं पात्रं निरूढवान् रूपधरः दशवर्षाणाम् अनन्तरं स्वगृहं प्राप्तवान् । तस्य प्रवासः अतीव विचित्रः आसीत् ।

एवंप्रकारेण ट्रायनगरस्य पतनम् अभवत् । ग्रीक्जनैः ट्रायनगरस्य आक्रमणात् पूर्वं ट्रायनगरं प्रपञ्चे एव सुन्दरतमं नगरम् आसीत् । ग्रीक्जनानाम् आक्रमणानन्तरं तस्य नगरस्य पुनर्निर्माणं कृत्वा बहवः राजानः ट्रायनगरं पालितवन्तः । किन्तु ट्रायनगरेण प्राचीना वैभवस्थितिः न प्राप्ता एव ।

(समाप्तम्)



# रसवार्ताः

## १४ मासात्मकं द्विचक्रिकाप्रयाणम्

१९८१ तमे वर्षे अहमदाबादनगरस्य तहेर्मद्रास्वर्यः षट् मासान् यावत् द्विचक्रिकया प्रवासं कर्तुम् इष्टवान् । तदीयौ मातापितरौ अपि एतं विषयम् अनुमतवन्तौ । तदा तस्य वयः १८ वर्षाणि आसन् । सः षण्णां मासानाम् अनन्तरं गृहं न प्रत्यागतवान्, अपि तु स्वप्रयाणं १४ मासपर्यन्तम् अनुवर्त्य ११६,००० कि.मी. दूरं यावत् द्विचक्रिकया एव प्रयाणं कृतवान् । ३० देशेषु सञ्चारं कृत्वा गृहं प्रत्यागतवान् सः न केवलं द्विचक्रिकाप्रयाणं कृतवान्, अपि तु तत्तत्प्रदेशस्य विशेषविषयान् भावचित्राणि च सङ्गृहीतवान् । आत्मना दृष्टानां जनानां विषयम् अधिकृत्य वीडियो चित्रमेकं निर्मितवान् । यदि सः स्वानुभवं लिखति, तर्हि तत् रोचकं पुस्तकं भवेत् ।



## रजताक्षरैः लिखितः बैबल्ग्रन्थः

स्टाक्होम्उप्साला विश्वविद्यालयस्य बैबल्-ग्रन्थस्थस्य पृष्ठद्वयम् आवरणपृष्ठं च गतात् एप्रिल्मासस्य पञ्चमदिनाङ्कात् न दृश्यन्ते । एकमासानन्तरं दूरवाणीद्वारा विश्वविद्यालय-व्यवस्थापकाः सूचिताः यत् - अदृश्यतां गतानि बैबल्पृष्टानि स्टाक्होम्प्रमुखधूमशकट-निस्स्थानकस्य कपाटिकायां सुरक्षितानि सन्ति इति । तानि बैबल् पृष्टानि रजतनिर्मितानि । षष्ठशतकस्य तस्य ग्रन्थस्य अक्षराणि रजतद्रवेण लिखितानि सन्ति । कानिचन अक्षराणि सुवर्णाक्षरैः लिखितानि । आवरणपृष्टे अपि सुवर्णं योजितम् अस्ति । १७ शतके स्पीडिष्सैनिकाः एतं ग्रथं फ्राग्तः (जेकोवेकिया) चौर्यं कृतवन्तः इति श्रूयते । 'गोथिक्' भाषया लिखितः अयं ग्रन्थः इदानीम् अपि स्पीडन्मध्ये एव अस्ति ।

## चतुर्वर्षीयः कार्यानचालकः

सन्नी कनोडियानामकः बालः मेमासस्य १९ दिनाङ्के मुम्बयीनगरस्य वीथ्यां कार्यानं चालितवान् । ततः पूर्वं सः मे ७ दिनाङ्के कलकत्तानगरे कार्यानं चालितवान् आसीत् । तदनन्तरं अहमदाबाद-नौगान्-गौहाती-सूरत्नगरेषु कार्यानं चालितवान् । एतस्मात् सर्वे अपि आश्चर्यचकिताः । यतः कनोडिया शिशुविहारे पठति । तस्य वयः केवलं ४ वर्षाणि । १९९३ तमे वर्षे हैदराबाद् नगरस्य चतुर्वर्षीयः जही अगर्वाला कार्यानं चालितवान् आसीत् । एतां वार्तां श्रुत्वा स्फूर्तिं प्राप्य कनोडिया अपि कार्यानचालनम् अभ्यस्तवान्, केषुचित् नगरेषु कार्यानचालनपूर्वकं नूतनं विक्रमं साधितवान् च । एतस्य नाम 'गिन्नीस् पुस्तके योजितम् अस्ति ।






# बादरायणमन्त्रः

आत्मना आरब्धं कार्यं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्, शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! भवान् निर्भयेन आत्मना आरब्धं कार्यं श्रद्धया निर्वहन् अस्ति इति यत् तत् प्रशंसार्हम् एव। किन्तु भवता क्रियमाणः अयं कठोरः परिश्रमः यदि कस्यचित् मन्त्रवादिनः मुनिवर्यस्य वा निमित्तं स्यात्, तर्हि भवान् अवश्यं निराशाम् अनुभविष्यति । यतः तादृशाः महापुरुषाः अमानुषीः शक्तीः साधयितुम् इच्छन्तः स्वार्थम् एव चिन्तयन्ति । एतद्विषये अत्यन्तं जागरूकता आश्रयणीया इति स्मारणार्थं मतङ्गनामकस्य मुनिवर्यस्य कथां श्रावयामि। श्रद्धया श्रृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वकाले राजारामनामकः कश्चित्

# वेतालकथा



गुणवान् आसीत् । वैभवजीवनं यापयतः तस्य समग्रा सम्पत्तिः नष्टा जाता ।

राजारामस्य पुत्रः सीतारामः । सीतारामः यदा विंशतिवर्षीयः जातः, तदा राजारामस्य गृहमात्रं तदधीने आसीत् । एतया चिन्तया एव शय्याम् आश्रितवान् राजारामः कदाचित् पुत्रं स्वसमीपम् आहूय उक्तवान् - ''वत्स ! मम दुराशाकारणतः एव अहम् एतां परिस्थितिं प्राप्तवान् अस्मि । किन्तु भवतः जीवने एतादृशी कष्टपरिस्थितिः न आगच्छेत् इति मम आशयः । भवतः इदानीं विंशतिवर्षाणि पूर्णानि अभवन् । अद्य रथसप्तमी अस्ति । अद्यतनदिनम् एव प्रतीक्षमाणः आसम् अहम् । इदानीं भवान् स्नात्वा शुभ्रं वस्त्रं धृत्वा अत्र आगच्छतु । सुखजीवनस्य रहस्यं भवन्तं वदिष्यामि अहम्'' इति ।

सीतारामः स्नानार्थं गन्तुम् उद्युक्तः । तावता तस्य माता लक्ष्मीदेवी पुत्रम् उक्तवती - ''वत्स ! अद्य रथसप्तमी खलु ! अतः स्नानसमये अर्कपर्णानि शिरसि संस्थाप्य स्नानं करणीयम्'' इति ।

अर्कपर्णानाम् अन्वेषणात् महान् विलम्बः जातः । तेन स्नात्वा आगमनसमये राजारामः दिवङ्गतः आसीत् । एतस्मात् नितरां दुःखितौ लक्ष्मीदेवी सीतारामः च क्रन्दनं कृतवन्तौ । तयोः क्रन्दनं श्रुत्वा प्रतिवेशिनः आगतवन्तः । प्रतिवेशिनां साहाय्येन सीतारामः पितुः शवसंस्कारं निर्वर्तितवान् ।

अनन्तरदिने प्रातःकाले एव राजारामाय दत्तस्य ऋणस्य प्रतिस्वीकरणार्थं बहवः सीतारामसमीपम् आगतवन्तः ।

रथसप्तम्याः अनन्तरदिने मम पुत्रः सर्वेषाम् ऋणदातृणाम् ऋणं प्रत्यर्पयिष्यति इति ऋणदातॄन् सूचितवान् आसीत् राजारामः ।

आगतान् ऋणदातॄन् उद्दिश्य सीतारामः उक्तवान् - ''इदानीम् एव अहं भवताम् ऋणं प्रत्यर्पयितुं न शक्नोमि । तदर्थं कश्चन कालः आवश्यकः'' इति ।

ऋणदातारः सीतारामस्य वचनं न अङ्गीकृतवन्तः । इदानीम् एव ऋणं प्रत्यर्पयतु इति सीतारामं वदन्तः ते महान्तं कोलाहलं कृतवन्तः । एतस्मात् किंकर्तव्यतामूढः सीतारामः मौनम् आश्रितवान् । तदा

रमणनामकः ऋणदाता अन्यान् उद्दिश्य - "भवतां सकाशात् बहु धनं न स्वीकृतवान् राजारामः । किन्तु सः मत्तः प्रभूतं धनम् ऋणरूपेण स्वीकृतवान् । अतः एतद्गृहम् अहं स्वायत्तीकरोमि । भवद्भ्यः अहं धनं दास्यामि । एषा व्यवस्था भवद्भिः अनुमता किम् ?" इति पृष्टवान् ।



सर्वे रमणस्य वचनम् अङ्गीकृतवन्तः । "एकदिनाभ्यन्तरे भवता एतद्गृहं परित्यज्य मात्रा सह इतः निर्गन्तव्यम् । गमनसमये एकं वस्तु अपि न नेतव्यं भवता" इति सीतारामम् आज्ञाप्य ततः निर्गतवान् रमणः ।

एतत् सर्वं दृष्ट्वा दुःखिता लक्ष्मीदेवी पुत्रम् उक्तवती - "वत्स ! कष्टकालः सन्निहितः अस्ति । गृहस्य अट्टे पुरातनी काचित् पेटिका अस्ति । तां पेटिकां स्वीकृत्य आवाम् इतः निर्गच्छाव । भवान् अट्टम् आरुह्य तां पेटिकाम् आनयतु" इति ।

मातुः वचनानुसारम् अट्टम् आरुह्य प्राचीनां पेटिकाम् उद्घाटितवान् सीतारामः । तत्र एकं लघुपुस्तकं विना अन्यत् किमपि न आसीत् । पुस्तके लिखितम् आसीत् - 'बादरायण, बादरायण, बादरायण' इति मन्त्रः यदि त्रिवारम् उच्चार्यते, तर्हि पुरतः स्थितः शत्रुः अपि स्नेहितः भविष्यति, अपेक्षानुगुणं साहाय्यं च करोति । एतत् तस्य वंशस्य वैशिष्ट्यम्' इति । तत्र अन्यः अपि कश्चन अंशः उल्लिखितः आसीत् यत् - सः विषयः स्वमरणपर्यन्तम् अपि अन्यत्र न वक्तव्यः' इति ।

एतत्सर्वं पठितवान् सीतारामः 'मरणात् पूर्वं पित्रा वक्तुम् इष्टः विषयः अयम् एव आसीत्' इति ज्ञातवान् । अनन्तरं सः अट्टात् अवतीर्य महता सन्तोषेण रमणस्य गृहं गत्वा, तेन सह सम्भाषणं कुर्वन् मनसा एव 'बादरायणं' त्रिवारं स्मृतवान् ।

तदा रमणः सीतारामेण सह आत्मीयतया वार्तालापं कुर्वन् - "भवतः पिता अत्यन्तं सज्जनः आसीत् । इदानीं भवान् कष्टकाले अस्ति इति तु मयि खेदं जनयति । तथापि भवान् दुःखं मा करोतु । भवान् यत् इच्छति, तत् वदतु । अहम् अवश्यं भवतः साहाय्यं करोमि" इति उक्तवान् ।

'मम ऋणसमस्यां निवारयतु भवान्'



इति उक्तवान् सीतारामः।

"दैवानुग्रहात् मम तु कापि न्यूनता नास्ति। अतः मह्यं भवता यत् धनं दातव्यम् आसीत् तत् मा ददातु। भवता अन्येभ्यः दातव्यम् ऋणम् अपि अहम् एव प्रत्यर्पयिष्यामि। भवान् गृहं गत्वा सुखेन जीवतु" इति उक्तवान् रमणः।

अनन्तरदिनेषु रमणः ऋणदातृभ्यः धनदानपूर्वकं सीतारामस्य साहाय्यं कृतवान्।

अकस्मात् रमणे एतादृशं परिवर्तनं कथं जातं स्यात् इति बहुधा चिन्तनेन अपि न ज्ञातवती लक्ष्मीदेवी। यतः सीतारामः बादरायणमन्त्ररहस्यं मातरं न उक्तवान् आसीत्।

इदानीं वासार्थं तु गृहम् अस्ति। ऋणव्यवहारः अपि समाप्तः। इतःपरं जीवननिर्वहणविषये चिन्तनीयम् इति चिन्तयन् एव सीतारामः आपणिकस्य मदनस्य समीपं गतवान्, बादरायणमन्त्रं त्रिवारम् उच्चारितवान् च। अनुक्षणम् आपणिकः मदनः गृहार्थम् अत्यावश्यकानि वस्तूनि सीतारामाय दत्तवान्। एवं मदनः प्रतिदिनम् अपि विना मूल्यं वस्तूनि सीतारामगृहं प्रेषयति स्म।

कानिचन दिनानि अतीतानि। कदाचित् रात्रौ कश्चित् चोरः चौर्यार्थं सीतारामस्य गृहं प्रविष्टवान्। तस्य अजागरूकतया अकस्मात् शब्दः अभवत्। एतस्मात् जागरणं प्राप्तवन्तौ लक्ष्मीदेवी-सीतारामौ भाययितुम् इच्छन् लवित्रं गृहीतवान् चोरः। अनुक्षणं सीतारामः मनसि एव त्रिवारं बादरायणमन्त्रम् उच्चारितवान्। तदा चोरः - "अहम् अनाथः अस्मि। मदीयः कोऽपि नास्ति। अद्य आरभ्य अहं चौर्यकार्यं परित्यज्य कमपि उद्योगं कुर्वन् जीवनं यापयिष्यामि" इति उक्त्वा ततः निर्गतवान् एव।

"सर्वम् अपि विचित्रम् इव भाति। सर्वे अपि किमर्थम् अस्माकं हितम् एव आचरन्ति ? भवान् वशीकरणमन्त्रस्य प्रयोगं कुर्वन् अस्ति वा ?" इति पुत्रं पृष्टवती लक्ष्मीदेवी।

"तथा किमपि नास्ति अम्ब ! पिता दिवङ्गतः, चेदपि तदीया आत्मा एव आवयोः साहाय्यम् आचरन् अस्ति इति चिन्तयामि

अहम्'' इति उक्तवान् सीतारामः।

एवंप्रकारेण सीतारामस्य जीवननिर्वहणं विना क्लेशं प्रचलति स्म।

एवं सति कदाचित् तं ग्रामं प्रति मतङ्गनामकः मुनिवर्यः आगतवान्। मतङ्गः अपूर्वशक्तिमान्। सः ग्रामीणानां बहूनां रोगनिवारणं कृतवान्। वरप्रदानेन बहून् अनुगृहीतवान् अपि सः। तद्ग्रामीणाः सर्वे परस्परं सम्भाषणं कुर्वन्ति स्म यत् - मतङ्गः श्रेष्ठः पुरुषः इति।

सीतारामः एतं विषयं ज्ञातवान्। 'बादरायणमन्त्रसाहाय्येन यदि अहं मतङ्गं वशीकरोमि, तर्हि मया सर्वं साधितं भवति, अहम् अपूर्वशक्तिमान् भविष्यामि' इति विचिन्त्य सीतारामः मतङ्गं दृष्ट्वा बादरायणमन्त्रं मनसा उच्चारितवान्।

मतङ्गः वात्सल्यपूर्वकं सीतारामं पश्यन् पृष्टवान् - ''वत्स! भवतः मुखदर्शनेन एव ज्ञायते 'भवान् भाग्यवान्' इति। अतः मम आवश्यकता का अस्ति भवतः?'' इति।

तदा सीतारामः मतङ्गं नमस्कृत्य सविनयम् उक्तवान् - ''स्वामिन्! सामान्यजनाः अपि बहवः मम साहाय्यं कुर्वन्तः सन्ति। तस्मात् मम सामान्याः अपेक्षाः पूरिताः भवन्ति। भवादृशः महानुभावः यदि मम साहाय्यं करोति, तर्हि मम असामान्याः अपि अपेक्षाः पूरिताः भविष्यन्ति इति मम आशयः'' इति।

सीतारामस्य एतत् वचनं श्रुत्वा मतङ्गमुनिः मन्दहासपूर्वकं - ''वत्स! प्रथमं



मम कथां शृणोतु तावत्'' इत्युक्त्वा स्वकथाम् आरब्धवान् -

मम इच्छा आसीत् यत् - प्रपञ्चस्य चक्रवर्तिना भवितव्यं मया इति। तदर्थम् अहं हिमालयं गत्वा कठोरं तपः आचरितवान्। केषुचित् एव दिनेषु भगवान् प्रत्यक्षीभूय माम् उक्तवान् - ''इदानीन्तनः चक्रवर्ती सज्जनः। उत्तमरूपेण प्रजाः पालयति। चक्रवर्तिपदव्याः सः योग्यः अस्ति। अतः तस्याः पदव्याः इच्छा न उचिता भवतः'' इति।

'अहम् अपि सज्जनः, चक्रवर्तिपदव्याः अर्हः च' इति उक्तवान् अहम्।

तदा भगवान् मां हितवचनैः बोधितवान् - ''भवान् सज्जनः इत्यत्र प्रमाणं



किमपि नास्ति । चक्रवर्तिपदवीप्राप्त्यर्थं तपःकरणं न उचितम् । स्वप्रयत्नेन स्वसामर्थ्येन सा पदवी सम्पादनीया । स्वप्रयत्नेन, स्वसामर्थ्येन यः चक्रवर्तिपदवीं प्राप्तवान्, तादृशम् अपि तपसा जेतुम् इच्छता भवता अपराधः कृतः'' इति ।

''एवं तर्हि मम तपसा किं प्रयोजनम् ?'' इति पृष्टवान् अहम् ।

''तपसा भवता अपूर्वाः शक्तयः सम्पादिताः सन्ति'' इति उक्तवान् भगवान् ।

''तर्हि अहम् अपूर्वाः शक्तीः उपयुज्य एव चक्रवर्ती भविष्यामि'' इति उक्तवान् अहम् ।

मम वचनं श्रुत्वा भगवान् उक्तवान् - ''मानवः अपूर्वाणां शक्तीनाम् उपयोगम् अनिवार्यसन्दर्भे एव कुर्यात् । दुराशया प्रतिपदं सः अपूर्वशक्तेः उपयोगं करोति चेत् कालान्तरे तस्य परिणामः तेन अनुभोक्तव्यः भवति एव । यादृशं साहाय्यं सः प्राप्नोति, तादृशं साहाय्यं कर्तुं तस्य अपि सामर्थ्यं स्यात् । अन्यथा स्वीकृतस्य दशगुणितां हानिम् अनुभवेत् सः कालान्तरे । बहवः ऋषयः मत्तः वरं प्राप्य तस्य सदुपयोगेन श्रेष्ठाः जाताः सन्ति । किन्तु केचन राक्षसाः वरस्य दुरुपयोगं कुर्वन्तः दारुणं मरणं प्राप्तवन्तः । तपःकरणं सामर्थ्यसम्पादनार्थं न, अपि तु देवदर्शनार्थम्, दैवसन्निधिं प्राप्तुं च । एतं विषयं कदापि मा विस्मरतु भवान्'' इति ।

तदा मयि विवेकः उदितः । भगवति लीनः भवितुम् इच्छन् अहं मम आशयं भगवन्तं निवेदितवान् ।

''ये ये जन्म प्राप्नुवन्ति, तेषु सर्वेषु अपि किञ्चन सामर्थ्यं भवति एव । सर्वेषाम् अपि किमपि प्रयोजनम् अस्ति एव । एतावत्पर्यन्तम् अपि भवता किमपि न साधितम् । यदा भवान् स्वसौजन्यं प्रमाणीकृत्य जीवने यत्किञ्चित् साधयिष्यति, तदा एव भवान् मम सन्निधिं प्राप्तुं योग्यः भविष्यति'' इति उक्त्वा ततः अदृश्यः जातः भगवान् ।

तस्मात् दिनात् आरभ्य अहं ग्रामं ग्रामम् अटन् जनसेवां कुर्वन् अस्मि ।

मतङ्गस्य कथा श्रुत्वा सीतारामः आत्मना कृतं दोषं ज्ञातवान् ।

'अहं बादरायणमन्त्रसाहाय्येन जनानां

सकाशात् साहाय्यं प्राप्तवान् अस्मि । पिता अपि तस्य जीवितकाले बादरायण-मन्त्रोच्चारणपूर्वकम् इतरेषां साहाय्यं प्राप्तवान् आसीत् । दुराशया सः तस्य मन्त्रस्य दुरुपयोगं कृतवान् । प्रतिफलरूपेण जनानां साहाय्यं कर्तुम् अशक्तः सः क्रमशः जीवने महतीं हानिम् अनुभूतवान् । केषुचित् एव दिनेषु अहम् अपि पितुः अवस्थाम् एव प्राप्स्यामि' इति चिन्तयन्तं सीतारामं परीक्षादृष्ट्या पश्यन् मतङ्गः उक्तवान् - "वत्स ! भवति कापि वशीकरणशक्तिः अस्ति । एवं ननु ! भवतु । इदानीं भवतः अपेक्षा का ? भवतः अपेक्षां प्रपूर्य एव अहम् इतः निर्गच्छामि ।" इति ।

सीतारामः क्षणकालं विचिन्त्य - "स्वामिन् ! भवान् चक्रवर्ती भवितुम् इच्छन् तपः कृतवान् । तपसा साधितानाम् अपूर्वाणां शक्तीनां साहाय्येन भवान् जनसेवां कुर्वन् चक्रवर्तिपदव्याः प्राप्त्यर्थम् अर्हतां सम्पादितवान् अस्ति । किन्तु भवान् इदानीं चक्रवर्तिपदवीं न इच्छति । एवं खलु !" इति पृष्टवान् ।

'आम्' इति उक्तवान् मतङ्गः ।

तदा सीतारामः उक्तवान् - "स्वामिन् ! अहं चक्रवर्ती भवितुं न इच्छामि । माम् एतस्य राज्यस्य महाराजं करोतु" इति ।

"हा हन्त ! एतावता एव भवता भगवतः हितवचनं विस्मृतं किम् ?" इति पृष्टवान् मतङ्गः ।

"न विस्मृतं स्वामिन् ! अस्य देशस्य राजा



तत्स्थानात् उच्चाटनीयः इति मम आशयः सर्वथा नास्ति । एतस्य राज्यस्य राज्ञः पुत्रः नास्ति । एकमात्रपुत्री अस्ति तस्य । पुत्र्याः विवाहार्थं योग्यस्य वरस्य अन्वेषणं कुर्वन् अस्ति महाराजः । महाराजस्य जामाता भवितुं या योग्यता आवश्यकी, तां योग्यतां सम्पाद्य स्वयंवरे तां जेतुम् अहं यथा शक्नुयाम्, तादृशेन वरेण माम् अनुगृह्णातु कृपया" इति मतङ्गं प्रार्थितवान् सीतारामः ।

"भवदिष्टं सिध्यति । इदानीं भवति विवेकः उदितः अस्ति । भवतः आशयं पूरयित्वा अहं भगवतः सन्निधिं प्राप्स्यामि" इति उक्तवान् मतङ्गः ।

वेतालः एवं कथां समाप्य अवदत् -

''राजन् ! मतङ्गमुनिः आत्मना साधितानाम् अपूर्वाणां शक्तीनां साहाय्येन सीतारामम् एकस्य देशस्य महाराजपदव्या अनुगृहीतवान् इति यत्, तत् तस्य अविवेकितां द्योतयति खलु ! सीतारामः तु बादरायण-मन्त्रोच्चारणसाहाय्येन बहुजनसकाशात् आत्मना इष्टं प्राप्नुवन् आसीत् एव । तादृशः स्वार्थी देशस्य राजा भविष्यति चेत् तस्य राज्यपरिपालनं कीदृशं स्वार्थसहितं अनीतियुतं स्यात् इति ऊहितुं शक्यते । एतम् अल्पम् अपि विषयं मुनिश्रेष्ठः मतङ्गः ज्ञातुं न शक्तवान् किम् ? शीघ्रातिशीघ्रं दैवसन्निधिं प्राप्तुम् इच्छन् सः वास्तविकतां विस्मृतवान् किम् ? एतावत्पर्यन्तम् अपि सीतारामः अन्यान् अवलम्ब्य एव जीवन् आसीत् इति जानन् अपि मतङ्गः महाराजपदवीदानेन सीतारामम् अनुगृहीतवान् खलु ! एतस्य किं कारणम् ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''सीतारामः स्वयं परिश्रमेण न जीवति, अपि तु मन्त्रसाहाय्येन जनानां सकाशात् स्वस्य आवश्यकताः पूरयति इति विषयं मतङ्गः जानाति एव । सीतारामेण क्रियमाणं कार्यम् अत्यन्तं पापकरम् इति ज्ञापयितुम् इच्छन् एव मतङ्गः स्वकथां सीतारामं श्रावितवान् । आसन्नमरणेन पित्रा उक्तस्य वचनस्य श्रवणात्, मतङ्गस्य अनुभवश्रवणात् च सीतारामस्य मनसि महत् परिवर्तनं जातम् अस्ति । यस्मात् साहाय्यं स्वीकृतं तेषां सर्वेषां साहाय्यं करणीयं चेत् प्रभूतं धनम् आवश्यकम् । तदर्थं राजपदवीप्राप्तिमार्गं विना अन्यः उपायः नास्ति । एतत् सर्वं विचिन्त्य एव सीतारामः राजा भवितुम् इष्टवान् । मतङ्गः अपि सीतारामस्य मनोभावम् अवगत्य तम् अनुगृहीतवान् । तेन किञ्चिदपि अविवेकिता न आचरिता इति तु स्पष्टम्'' इति ।

एवं राज्ञः यदा मौनभङ्गः जातः, तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# मध्यभारतदेशस्थानि दुर्गाणि

रचना - मीरा उग्रा * चित्राणि - अरित्रा

मध्यप्रदेशस्य नैर्ऋत्यभागे 'माण्डू' नामकं दुर्गम् अस्ति । पूर्वं 'माण्डू' दुर्गं 'मण्डपदुर्ग' नाम्ना व्यवह्रियते स्म । १२ शतके पार्मार्राजाः एतस्य दुर्गस्य पुनर्निर्माणं कृतवन्तः ।

सामान्यतः १५५० तमे वर्षे एतं प्रदेशं पालितवान् सुल्तान्बौज्बहादूर्वर्यः सङ्गीतप्रियः, कलायाः आराधकः च आसीत् । ख्यातगायिकायाः निमित्तं तेन निर्मितं भवनम् अत्यन्तं रमणीयम् अस्ति । एतस्य भवनस्य समीपे एव प्रवहन्ती नर्मदानदी नयनमनोहरा दृश्यते ।



माण्डू

कदाचित् जहाङ्गीर्चक्रवर्ती अत्र सप्त मासान् यावत् उषितवान् आसीत् । सः स्वराज्ञ्याः नूर्जहान्वर्यायाः निमित्तं १९८ सोपानैः युक्तं रमणीयं भवनमेकं निर्मितवान् । नूर्जहान्वर्यया सोपानानाम् आरोहणसमये एकैकस्मिन् अपि सोपाने सुवर्णनाणकद्वयं स्थाप्यते स्म ।



५२५ तमे वर्षे सूरज्सेनः ग्वलीपमुनेः नाम्ना ग्वालियर्दुर्गं निर्मितवान् । पर्वतमूले चतुरस्रस्थले निर्मितम् एतत् दुर्गं 'तोमर' राजानां काले (१३८८-१५१८) अत्यन्तं वैभवस्थितौ आसीत् ।

तोमरराजेषु अग्रगण्यः मानसिङ्गः सुप्रसिद्धं 'मानमन्दिरं' निर्मितवान् । चतुरट्टयुतस्य भवनस्य अस्य अट्टद्वयं भूमेः अन्तः निर्मितम् अस्ति ।



मानमन्दिरम्, ग्वालियर्

मानसिङ्गस्य कलाप्रियताकारणतः सङ्गीतक्षेत्रे शिल्पकलाक्षेत्रे च विशेषप्रगतिः जाता । प्रसिद्धः सङ्गीतविद्वान् महम्मद्घौस्, तस्य प्रमुखः शिष्यः तानसेनः च ग्वालियर्नगरे एव वासं कृतवन्तौ आस्ताम् । तत्रत्यः सङ्गीतसम्प्रदायः 'ग्वालियर् घराना' इति प्रसिद्धिम् अवाप्नोत् ।

ऊर्वहिद्वारस्य समीपे जैनतीर्थङ्कराणां



तानसेनस्मारकम्



आदिनाथविग्रहः

महाकारकाः विग्रहाः शिलाभिः निर्मिताः सन्ति । आदिनाथस्य विग्रहस्य औन्नत्यं नवदशपाद- परिमितम् ।

१८५७ तमे वर्षे पालकानां विरुद्धम् आरब्धे आन्दोलने ग्वालियर्सैनिकाः प्रतिभटनां कृत्वा झान्सी लक्ष्मीबायीं तात्याटोपिवर्य च शरणं गतवन्तः । तौ उभौ अपि १८५८ तमे वर्षे ग्वालियर्दुर्गं स्वायत्तीकृत्य ब्रिटिष्पक्षीयं सिन्धियाराजं प्रताड्य आग्रां प्रति प्रेषितवन्तौ । किन्तु अनन्तरकाले सर् ह्यू रोज्वर्यः अत्र ससैन्यम् आक्रमणं कृतवान् । भीकरं युद्धं प्रवृत्तम् । तस्मिन् युद्धे राज्ञी लक्ष्मीबायी १८५८ तमवर्षस्य जून्मासस्य १७ दिनाङ्के वीरोचितं मरणं प्राप्तवती । यत्र तस्याः शवसंस्कारः कृतः, तत्र तस्याः स्मारकस्थलम् अद्यापि द्रष्टुं शक्यम् ।

मध्यभारतदेशे चुनार्दुर्गं, रोह्तास्घढ्, कलिञ्जर्दुर्गं च अजेयानि अभेद्यानि च इति प्रख्यातानि आसन् । किन्तु षेर् खान् (षेर् षा सूर्) एतानि त्रीणि दुर्गाणि अपि त्रिप्रकारैः स्वाधीनीकृतवान् ।

उत्तरप्रदेशस्य विन्ध्यपर्वतस्य गोपुराकारे पर्वतशिखरे चुनार्दुर्गं निर्मितम् अस्ति । पर्वतस्य एकः भागः गङ्गानद्याः दिशि अवनतः अस्ति । अतः तस्मात् पार्श्वात् शत्रवः आक्रमणं कर्तुं न शक्नुवन्ति ।



१५३१ तमे वर्षे सुबेदार्



ताज़्खान्वर्यस्य विधवां पत्नीं लाड् मालिकां परिणीया षेर्खान् चुनार्दुर्गं स्वायत्तीकृतवान्।



चुनार्दुर्गम्

षेर्खान्वर्यस्य आधीन्ये स्थितं चुनार्दुर्गं १५३८ तमे वर्षे हुमायून्वर्यः स्वाधीनीकृतवान्। तदा षेर्खान् स्वस्य वासार्थम् अन्यस्थानस्य अन्वेषणम् आरब्धवान्। तदर्थं सः कञ्चित् उपायं विचिन्त्य स्वकुटुम्बस्य आश्रयार्थं रोहतास्घढ्प्रदेशे स्थलम् आवश्यकम् इति तत्रत्यं राजकुमारं प्रार्थितवान्। राजकुमारः षेर्खानस्य दुर्बुद्धिम् अज्ञात्वा तस्मै स्थलदानम् अङ्गीकृतवान्। षेर्खान्वर्यः ७०० शिबिकाः सज्जीकृतवान्, दुर्गस्य अन्तः प्रेषितवान् च। दुर्गस्य रक्षकभटाः आरम्भे आगतानाः ५० शिबिकाः परीक्षितवन्तः। तासु सर्वासु अपि शिबिकासु वृद्धाः महिलाः एव आसन्। अतः रक्षकभटाः अवशिष्टानां शिबिकानां परिशीलनं विना एव दुर्गस्य अन्तः गन्तुम् अनुमतिं दत्तवन्तः।

क्षणाभ्यन्तरे एव आयुधधारिणः अफ्घन्सैनिकाः शिबिकातः बहिः आगत्य दुर्गस्य आक्रमणं कृतवन्तः। आश्रयं दत्तवन्तं राजकुमारम् अपि तत्स्थानात् उच्चाटितवन्तः। एवंरीत्या कैमार्पर्वतस्य उपरि विद्यमानम् अभेद्यम् अपि रोहतासदुर्गं स्वायत्तीकृतवान् षेर्खान्वर्यः।

चुनार् रोहतास्घढप्रकरणानि चन्द्रकान्त-भूतनाथ-कुसुमकुमारीप्रभृतीनां साहसमयकथापुस्तकानां लेखकस्य देवकीनन्दनखात्रिवर्यस्य स्फूर्तिजनकानि अभवन्।

रोहतास्घढ्

विन्ध्यपर्वते स्थितं कलिञ्जरदुर्गम् अस्माकं देशस्य प्राचीनदुर्गेषु अन्यतमम् । ग्रीक्-इतिहासकारः टोल्मी कलिञ्जरदुर्गं 'काञ्जोर्' नाम्ना व्यवहृतवान् ।

१५४५ तमे वर्षे षेर् षा सूर् सैन्येन एतस्य दुर्गस्य उपरि आक्रमणं कृतम् । तदा एतत् दुर्गं कीर्तिसिङ्ग चन्देलावर्यः पालयति स्म । वर्षपर्यन्तम् आक्रमणं प्रवृत्तं चेदपि स्वायत्तीकर्तुं न शक्तम् अभवत् षेर्षासैन्येन । तदा तत्रत्यानां लोपदोषाणां निवारणार्थम् आक्रमणस्य च परिशीलनार्थं षेर्खान्वर्यः एव स्वयम् आगतवान् ।

कलिञ्जर्दुर्गम्

१५४५ तमे वर्षे अफ्घन्सैनिकैः स्फोटितं स्फोटकमेकं दुर्गस्य द्वारेण घट्टितं सत् प्रत्यागत्य बहिः सङ्गृहीतस्य स्फोटकानां राशेः उपरि पतितम् । स्फोटकानां परस्परघर्षणेन अग्निः उत्पन्नः । परिणामतः तत्रैव पार्श्वे स्थितः षेर्खान्वर्यः तीव्रं व्रणितः अभवत् । एतत् दृष्ट्वा क्रुद्धाः सैनिकाः प्रतीकारं साधयितुम् इच्छन्तः वीरावेशेन दुर्गभित्तीः भञ्जयित्वा दुर्गं स्वायत्तीकृतवन्तः । कीर्तिसिङ्गं बद्ध्वा तं मारितवन्तः । तावता व्रणितः षेर्खान्वर्यः अपि मरणं प्राप्तवान् आसीत् । अतः तैः साधितः अपि जयः निष्प्रयोजकः जातः ।

प्रयागसमीपस्थं गङ्गायमुनयोः सङ्गमसमीपे स्थितं अलाहाबाद्दुर्गं मोगल्चक्रवर्ती अक्बर् निर्मितवान् । १५८३ तमे वर्षे अलाहाबाद् गतः अक्बर्महाशयः नवेम्बर्मासस्य चतुर्थे दिनाङ्के 'दैवनिलय' नामकस्य (इल्लाहा-आवास्) नगरस्य शङ्कुस्थापनं कृतवान् । किन्तु गभीरं प्रवहन्त्याः यमुनायाः प्रवाहस्य, वेगेन प्रवहन्त्याः गङ्गायाः प्रवाहस्य च कारणतः तत्र दुर्गनिर्माणं महते कष्टाय जातम् । एतस्य दुर्गस्य निर्माणार्थं दशवर्षाणां कालः अपेक्षितः जातः । षट्कोट्यधिकरूप्यकाणां व्ययः जातः अपि ।

ब्रिटिष्जनाः १३८० तः उपेक्षां प्राप्तवन्तं कौशाम्बि-अशोकस्तूपम् आनीय १८३८ तमे वर्षे एतस्मिन् दुर्गे प्रतिष्ठापितवन्तः ।

अलहाबाददुर्गम्





# सम्माननम्

कस्मिंश्चित् ग्रामे भास्करनामकः कविः आसीत् । सः महाराजसकाशात् सम्माननं प्राप्तुम् इच्छन् तस्य देशस्य राज्ञः चन्द्रहासस्य गुणातिशयवर्णनपूर्वकं महाकाव्यमेकं लिखितवान्। एतं विषयं कथं महाराजं निवेदयामि इति चिन्तयन् तद्विषये भास्करः ग्रामाधिकारिणः साहाय्यं प्रार्थितवान्।

''राजदर्शनार्थम् अहं साहाय्यं कर्तुं न शक्नोमि । राजधान्याम् आस्थानकवयः ये सन्ति, तेषाम् आश्रयणेन भवतः कार्यं सिध्येत्'' इति भास्करम् उक्तवान् ग्रामाधिकारी।

भास्करः आत्मना लिखितं काव्यं स्वीकृत्य राजधानीं प्रति प्रस्थितः । शीघ्रम् एव राजधानी प्राप्तव्या इति आशयेन भास्करः समीपतरं मार्गम् आश्रितवान्। तेन किञ्चिद्दूरं यदा गतं, तदा कश्चित् चोरः तस्य समीपम् आगत्य 'भवतः समीपे यत् अस्ति तत् ददातु' इति उक्तवान्।

तदा भास्करः - ''इदानीं मम सकाशे किमपि नास्ति। अहं राजधानीं गत्वा मदीयं काव्यं राज्ञे दर्शयिष्यामि । तस्मात् सन्तुष्टः महाराजः मह्यं धनं दास्यति। तत्र अर्धभागं भवते दास्यामि अहम्'' इति सविनयं चोरं प्रार्थितवान्।

एतत् श्रुत्वा चोरः आश्चर्येण - ''भवान् कविः वा ? एवं तर्हि भवता मम गुरुः अवश्यं द्रष्टव्यः एव। यतः कवीनां विषये मम गुरोः महान् आदरः। आगच्छतु तावत्'' इति वदन् वस्त्रेण भास्करस्य नेत्रे आच्छाद्य तं स्वगुरुसमीपं नीतवान्।

सः प्रदेशः अरण्यस्य मध्यभागः इव दृश्यते स्म। तत्र बहवः चोराः, दुष्टाः, क्रूराः च विविधकार्येषु मग्नाः आसन् । श्वेतवस्त्रधारी तेषां गुरुः तेजस्वी आसीत्।

'अनामिका'



चोरः भास्करविषयं स्वगुरुं निवेदितवान्।

तदा गुरुः भास्करम् उद्दिश्य उक्तवान् - ''मम नाम विद्यानाथः। मह्यं कविताः अतीव रोचन्ते । रमणीयम् एतत् अरण्यं कवितारचनार्थं स्फूर्तिदायकम् अस्ति। अतः भवान् अपि अत्रैव निवसतु'' इति।

''किन्तु अहं महाराजसकाशात् सम्माननं प्राप्तुम् इच्छामि'' इति उक्तवान् भास्करः।

एतत् श्रुत्वा विद्यानाथः गम्भीरस्वरेण उक्तवान् - ''राजसम्माननं प्राप्तव्यम् इति भवतः इच्छा वा ? कवयः तादृशीम् अपेक्षां न कुर्युः । यतः राजानः कवीनां द्वारा नीचकार्याणि कारयन्ति'' इति।

''चोराणां मध्ये निवसन् भवान् राज्ञां विषये दुरभिप्रायं प्रकटयन् अस्ति इति यत् तत् तु उपहासास्पदम् अस्ति'' इति उक्तवान् भास्करः।

'अहं यैः सह निवसामि, तान्, तेषां व्यवहारं च न जानाति भवान्। सद्यः एव भवान् वस्तुस्थितिम् अवगमिष्यति'' इति उक्तवान् विद्यानाथः।

तस्मिन् दिने सूर्यास्तानन्तरं विद्यानाथः तत्रत्यान् उद्दिश्य भागवतस्थान् श्लोकान् श्रावयित्वा, तेषाम् अर्थम् अपि विवृतवान्। ''निरस्तपादपे देशे एरण्डोऽपि द्रुमायते । एवमेव विद्यानाथः एतेषां चोराणां मध्ये श्रेष्ठतमः जातः अस्ति । अतः एव सः चिन्तयति यत् एषः अरण्यप्रदेशः एव उत्तमः अस्ति इति'' इति चिन्तितवान् भास्करः।

भास्करः अनन्तरदिने उषःकाले एव प्रयाणार्थं सन्नाहं कृतवान्। तदा तस्य गमनं निवारयन् विद्यानाथः भास्करम् उद्दिश्य - ''एतादृशम् उत्तमं वातावरणं भवान् अन्यत्र प्राप्तुं न शक्नोति। अत्र चेत् भवान् सुखेन जीवितुं शक्नोति'' इति उक्तवान्।

विद्यानाथस्य वचनं श्रुत्वा अपि भास्करः तत्र स्थातुं न इष्टवान् । तदा विद्यानाथः उक्तवान् - ''एतत् अरण्यम् अतिक्रम्य गच्छति चेत् भवान् रङ्गपुरनामकं ग्रामं प्राप्नोति । तत्र वल्लभनामकः मम शिष्यः निवसति। सः महान् कविः। भवान् वल्लभं पश्यतु, येन भवतः अग्रिमकार्याणि सुखकराणि भवन्ति'' इति।

विद्यानाथस्य वचनम् अङ्गीकृत्य भास्करः ततः प्रस्थाय रङ्गपुरं प्राप्तवान्। तत्र भास्करः

वल्लभविषये बहुजनान् विचारितवान् । तथापि वल्लभस्य वासस्थलं न ज्ञातम् एव । अन्तिमप्रयत्नरूपेण भास्करः कस्यचित् गोपालकस्य समीपं गत्वा पृष्टवान् – "भवान् वल्लभं जानाति वा ?" इति ।

"अहम् एव वल्लभः । मम समीपे किं कार्यं भवतः ?" इति पृष्टवान् गोपालकः ।

एतत् श्रुत्वा भास्करः आश्चर्येण – "भवान् एव वल्लभः वा ? भवान् महान् कविः इति भवतः गुरुणा विद्यानाथेन उक्तं खलु !" इति उक्तवान् ।

गुरोः विद्यानाथस्य नामश्रवणमात्रेण सन्तुष्टः वल्लभः भास्करं पृष्टवान् – "भवान् विद्यानाथसकाशात् आगच्छन् अस्ति किम् ? कुशली खलु सः ? एतेषु दिनेषु तेन नूतनं किमपि काव्यं रचितं किम् ?" इति ।

"विद्यानाथः कविताः, काव्यानि वा लिखति उत न इति न जानामि अहम् । किन्तु सः प्राचीनकवीनां काव्यानि पामरान् पाठयन् दिनानि यापयन् अस्ति । तदास्तां तावत्, भवान् कथं विद्यानाथस्य शिष्यः जातः ? ततः किं साधितं भवता ?" इति पृष्टवान् भास्करः ।

तदा वल्लभः उक्तवान् – "अहं कस्मिंश्चित् निर्धनकुले जन्म प्राप्तवान् । बाल्यात् अपि अहं कविताः अतीव इच्छामि स्म । कदाचित् विद्यानाथः मम ग्रामम् आगतवान् । तस्मिन् दिने सायङ्कालसमये ग्रामदेवालयस्य पुरोभागे सम्मिलितान् जनान् उद्दिश्य विद्यानाथः कुमारव्यासेन रचितस्य काव्यस्य



श्लोकान् रमणीयशैल्या विवृतवान् सभासमाप्त्यनन्तरम् अहं विद्यानाथसमीपं गत्वा – "स्वामिन् ! सौजन्यं, प्रकृतिसौन्दर्यं च यदा अहं पश्यामि, तदा मयि कवितारचनाशक्तिः उद्गता भवति । तदा अहं पद्यानि रचयित्वा गायामि । किन्तु मम पद्यानाम् अर्थम् अहम् एव ज्ञातुं न शक्नोमि । अतः कृपया भवान् मया रचिताः कविताः परिशील्य एताः उत्तमाः उत न इति वदतु" इति वदन् आत्मना रचिताः काश्चन कविताः दर्शितवान् ।

विद्यानाथः ताः कविताः दृष्ट्वा उक्तवान् – "वत्स ! भवति कवित्वगुणः जन्मजातः अस्ति । भवान् मया सह आगच्छतु । वर्षाभ्यन्तरे भवान् श्रेष्ठः कविः यथा



भविष्यति, तथा भवते शिक्षणं दास्यामि अहम्'' इति।

एतस्मात् अतीव सन्तुष्टः अहं विद्यानाथेन सह गतवान्। मया एकं काव्यं रचितम्। विद्यानाथः मया रचितं काव्यं पठित्वा अतीव सन्तुष्टः सन् मां हितवचनैः बोधितवान् - ''सर्वदा भवान् एवमेव कविताः रचयतु, येन भवान् कवितारचने नैपुण्यं सम्पादयितु शक्नोति। अपि च भवान् कदापि कवितारचनानिमित्तं राजाश्रयस्य अपेक्षां मा करोतु'' इति।

गुरोः हितवचनं श्रुत्वा अहं गृहं प्रत्यागतवान्। तावता मम पिता अनारोग्यपीडितः आसीत्। गृहस्य सर्वदायित्वम् अपि मया एव निर्वोढव्यम् आपतितम्। दारिद्र्यकारणात् महता परिश्रमेण कुटुम्बनिर्वहणं करणीयम् आसीत्। अतः इतःपरं कवितारचनद्वारा धनं सम्पादयिष्यामि इति विचिन्त्य अहं राजधानीं प्रतिप्रस्थितवान्। किन्तु राजास्थानस्य वातावरणे वासम् अनिच्छन् अहं ततः स्वग्रामं प्रति एव आगतवान्।

यदा अहं स्वग्रामं प्रत्यागतवान्, तदा रत्नाकरनामकः मम ग्रामीणः माम् आहूय उक्तवान् - ''यदि भवान् मम पुत्रीं परिणीय, मम गृहे एव निवासं करिष्यति, तर्हि अहं भवतः मातापित्रोः सेवार्थं सेवकान् नियोजयिष्यामि। तदर्थं च यः व्ययः भविष्यति, तस्य अपि व्यवस्थाम् अहम् एव करिष्यामि। भवान् मम गृहे एव निवसन् विना विघ्नं कविताः रचयितुं शक्नोति'' इति।

''अहं रत्नाकरस्य वचनम् अङ्गीकृत्य तस्य पुत्रीं कमलां परिणीतवान्। किन्तु अतीव गर्विष्ठा सा मत्तः धेनुपालनकार्यम् अपि कारयति'' इति उक्तवान् वल्लभः।

'हा हन्त ! भवतः जीवनम् अत्यन्तं कष्टमयं खलु !' इति उक्तवान् भास्करः।

तदा वल्लभः उक्तवान् - ''मम किमपि कष्टं नास्ति। मनसः अशान्तिः अपि नास्ति। यतः कवितारचनार्थं मम महान् समयः भवति'' इति।

एतत् श्रुत्वा अपि वल्लभस्य वचनेषु विश्वासः न उत्पन्नः भास्करस्य। 'वल्लभस्य कविताः उत्तमाः न स्युः। अतः एव सः

राजाश्रयं न प्राप्तवान् स्यात्' - इति चिन्तितवान् भास्करः । अनन्तरं भास्करः ततः राजधानीं गन्तुम् उद्युक्तः ।

तदा वल्लभः भास्करम् उक्तवान् - "राजधान्यां वेदाचार्यनामकः महान् कविः अस्ति । भवान् तं पश्यतु । सः भवतः साहाय्यं करिष्यति" इति ।

भास्करः राजधानीं गत्वा वेदाचार्यः नगरात् बहिः स्थिते आश्रमे रोगिणां सेवां कुर्वन् अस्ति इति ज्ञात्वा तत्र गतवान् ।

वेदाचार्यः भास्करस्य आगमनोद्देशं ज्ञात्वा उक्तवान् - "वत्स ! कविः राजाश्रयं प्राप्य सहजतया एव कीर्तिं प्राप्स्यति । किन्तु तदनन्तरं राज्ञां सेवाकरणं यत् अस्ति, तत् तु परमवेदनाजनकम् एव । एतत् ज्ञात्वा एव विद्यानाथः राजाश्रयम् अनिच्छन् अरण्यं गतवान् । वल्लभः रत्नाकरस्य जामाता जातः । अहं रोगिणां सेवां कुर्वन् अस्मि । भवतु, भवता कीदृशं काव्यं रचितम् ? अहं भवतः काव्यं द्रष्टुम् इच्छामि" इति ।

भास्करः वेदाचार्यं स्वकाव्यं दर्शितवान् । वेदाचार्यः काव्यं पठित्वा उक्तवान् - "वत्स ! प्रशंसाप्रियाणां राज्ञां दास्यम् इदानीम् एव आरब्धम् अस्ति भवता । अतः भवता राजाश्रयः अवश्यं प्राप्यते" इति ।

एतत् श्रुत्वा भास्करः कोपाविष्टः सन् पृष्टवान् - "मया कीदृशी दास्यवृत्तिः आचरिता ?" इति ।

तदा वेदाचार्यः गम्भीरस्वरेण उक्तवान् - "एतत् काव्यं महाराजस्य चन्द्रहासस्य प्रशंसाप्रधानम् अस्ति । वस्तुतः चन्द्रहासः एतादृशप्रशंसायाः अर्हः न । ये विना योग्यताम् अपि प्रशंसाम् इच्छन्ति, ते कवीनां द्वारा प्रशंसाप्रधानानां काव्यानां रचनं कारयन्ति । महाराजानाम् एतादृशानाम् अपेक्षाणां पूरयिता कविः अनीतिमान् एव" इति ।

एतत् श्रुत्वा भास्करः वास्तविकतां ज्ञातवान् । ततः राजदर्शनस्य अपेक्षां परित्यज्य स्वग्रामं प्रति गतवान् । तत्र शान्तमनस्कः सन् काव्यानि रचयन् कालं यापितवान् ।





# रमानन्दस्य वैराग्यम्

रमानन्दनामकः कश्चित् गार्हस्थ्य-जीवनं यापयन् आसीत् । सः कदाचित् जीवनात् विरक्तः सन् वृद्धां मातरं, पत्नीं, पुत्रान् च परित्यज्य गृहात् निर्गतवान्, देशसञ्चारं कुर्वन् मङ्गलापुरनामकं ग्रामं प्राप्तवान् च । हरितायमानैः उद्यानैः, नयनमनोहरैः पर्वतैः नदीभिः च युक्तः सः ग्रामः रमणीयः आसीत् । सः परिसरः रमानन्दाय अरोचत । ग्रामात् बहिः स्थितायाः नद्याः तीरे विद्यानन्दस्य आश्रमः अस्ति इति ज्ञात्वा रमानन्दः तत्र गत्वा विद्यानन्दस्य दर्शनं प्राप्तवान् ।

आगतं रमानन्दं दृष्ट्वा स्वामी विद्यानन्दः वात्सल्येन पृष्टवान् - ''वत्स ! भवान् किम् इच्छति ?'' इति ।

तदा रमानन्दः सविनयं प्रार्थितवान् - ''मां भवतः शिष्यत्वेन स्वीकरोतु, येन अहं भवतः सेवां कुर्वन् अत्रैव स्थातुं शक्नुयाम्'' इति ।

रमानन्दस्य वचनं श्रुत्वा विद्यानन्दः परीक्षादृष्ट्या रमानन्दं पश्यन् उक्तवान् - ''विद्यार्जनेच्छया ये ब्रह्मचारिणः मत्समीपम् आगच्छन्ति, तान् केवलं शिष्यत्वेन स्वीकरोमि अहम् । किन्तु भवान् तादृशः इव न भाति खलु !'' इति ।

तदा रमानन्दः - ''स्वामिन् ! सर्वज्ञः भवान् दिव्यदृष्ट्या एव सर्वमपि ज्ञातुं प्रभवति । तथापि अहं वस्तुस्थितिं वदामि । अहं न ब्रह्मचारी । मम पत्नी, त्रयः पुत्राः, वृद्धा माता च सन्ति । मम पत्नी तु कलहशीला । मम पत्न्याः मातुः च सदा कलहः । तयोर्मध्ये समञ्जनम् एव नास्ति । श्वश्रू-स्नुषयोः कलहात् अहम् अतीव कष्टम् अनुभवन् अस्मि । यदि पत्न्याः वचनं शृणोमि, तर्हि मातुः कोपः । मातुः वचनं शृणोमि चेत् पत्न्याः कोपः ! तस्मिन् गृहे मम

मनसः शान्तिः एव न भवति । अतः एव अहं गृहं परित्यज्य मनसः शान्तेः प्राप्त्यर्थं भवतः समीपम् आगतवान् अस्मि । अतः कृपया मां भवतः शिष्यत्वेन अङ्गीकरोतु, येन अहं मनसः शान्तिं प्राप्नुयाम्'' इति प्रार्थितवान् ।

एतत् श्रुत्वा विद्यानन्दः उक्तवान् - ''मम आश्रमे गृहस्थानां प्रवेशावकाशः नास्ति'' इति ।

''कृपया मां मा तिरस्करोतु । अहं भवतः सेवां कुर्वन् अत्रैव तिष्ठामि'' इति दीनस्वरेण प्रार्थितवान् रमानन्दः ।

तदा विद्यानन्दः - ''एवं तर्हि सद्यःकाले अत्र भवतः वासार्थम् अवकाशं कल्पयिष्यामि । अनन्तरं विचिन्त्य निर्णयं कथयिष्यामि'' इति उक्तवान् ।

सप्ताहाभ्यन्तरे एव आश्रमजीवनशैल्या जुगुप्सा उत्पन्ना रमानन्दे । आश्रमस्य कठोरनियमानां पालनं, सात्त्विकाहारस्य खादनं च अतीव कष्टाय भवति स्म रमानन्दस्य । तदा सः ज्ञातवान् यत् पूर्वतनं जीवनम् एव सुखमयम् आसीत् इति ।

कदाचित् रात्रिसमये अङ्गणे निद्रां कुर्वन्तं रमानन्दं स्वामी विद्यानन्दः उत्थापितवान् । एतस्मात् सम्भ्रान्तः रमानन्दः ''किम् ? किं प्रवृत्तम् ?'' इति पृष्टवान् ।

''विशेषः कोऽपि नास्ति । अस्मिन् समये जपं कर्तुम् इष्टवान् अहम् । किन्तु मम जपमाला न दृश्यते । बहुधा अन्वेषणेन अपि जपमाला न लब्धा । आगच्छतु, मिलित्वा अन्वेषणं करवाव'' इति वदन् रमानन्दम् आश्रमात् बहिः नीतवान् विद्यानन्दः ।

''स्वामिन् ! रात्रौ शयनात् पूर्वं जपमाला



कुत्र स्थापिता आसीत् भवता ?'' इति पृष्टवान् रमानन्दः ।

तदा विद्यानन्दः उक्तवान् - ''प्रकोष्ठस्य कोणे स्थितायाः पेटिकायाः उपरि स्थापितम् आसीत् । किन्तु अन्तः प्रकोष्ठे अन्धकारः खलु ! अतः अत्र बहिः कौमुद्याः प्रकाशे अन्वेषणं करवाव'' इति ।

एतत् श्रुत्वा रमानन्दः प्रयत्नेन हासं निगृह्णन् - ''स्वामिन् ! किमिदम् ? जपमाला यत्र स्थापिता आसीत्, तत्रैव अन्वेषणं करणीयं खलु ! अन्यत्र अन्वेषणेन कथं वा जपमाला प्राप्येत ?'' इति पृष्टवान् ।

तदा स्वामी विद्यानन्दः मन्दहासपूर्वकम् उक्तवान् - ''युक्तम् एव उक्तं भवता । किन्तु भवता किं कृतम् ? गृहे मनश्शान्तिः नास्ति इति, शान्तेः अन्वेषणं कुर्वन् ग्रामं ग्रामम् अटन् एतावद्दूरम् आगतः अस्ति भवान् । गृहे नष्टा शान्तिः यदि अन्यत्र लभ्येत तर्हि जपमाला अपि प्रकोष्ठात् बहिः अन्वेषणेन लभ्येत एव खलु !'' इति ।

अनुक्षणं रमानन्दः विद्यानन्दवचनस्य तात्पर्यं ज्ञात्वा भक्त्या विद्यानन्दं पादस्पर्शपूर्वकं नमस्कृत्य उक्तवान् - ''मम अज्ञानं दूरीकृतवान् भवान् ! अहम् इदानीम् एव मम ग्रामं प्रति गमिष्यामि । गृहे एव मनश्शान्तिं प्राप्य सन्तोषेण जीवनं यापयिष्यामि'' इति ।

तदा विद्यानन्दः मन्दहासपूर्वकं रमानन्दम् आशिषा अनुगृह्य उक्तवान् - ''त्वरा मास्तु । अस्यां रात्रौ सुखेन निद्रां करोतु अत्रैव । प्रातःकाले भवतः पत्न्या सह गच्छतु'' इति ।

वस्तुतः प्रवृत्तम् एतत् - रमानन्दस्य पत्नी स्वबन्धुद्वारा ज्ञातवती आसीत् यत् - पतिः विद्यानन्दस्वामिनः आश्रमे अस्ति इति । अतः सा विद्यानन्दस्य आश्रमम् आगत्य तं प्रार्थितवती - ''इतःपरम् अहं श्वश्रूः च कलहं विना सन्तोषेण एव भवावः । भवान् कृपया मम पतिं गृहं प्रतिप्रेषयतु'' इति ।

अनन्तरदिने प्रातः एव रमानन्दः विद्यानन्दस्वामिनः अनुमतिं प्राप्य पत्न्या सह सन्तोषेण स्वग्रामं प्रति प्रस्थितः ।






# महाभारतम्

द्रुपदस्य इच्छा आसीत् - 'कश्चित् पुत्रः प्राप्तव्यः, यश्च भाविनि काले द्रोणं मारयेत्। काचित् पुत्री अपि प्राप्तव्या, या च भाविनि काले अर्जुनस्य सहगामिनी स्यात्' इति। एतदर्थं सः मुनीनाम् अनुगृहं प्राप्तुम् इच्छन् गङ्गायमुनासङ्गमस्य समीपे स्थितं कञ्चन आश्रमं गतवान्। तस्मिन् आश्रमे याज-उपयाजनामकौ उभौ सहोदरौ निवसतः स्म। कश्यपगोत्रोत्पन्नौ तौ वेदपारायणं कुर्वन्तौ सूर्यस्य आराधनं कुर्वन्तौ आस्ताम्। तयोर्मध्ये अनुजः उपयाजः एव श्रेष्ठतरः इति विचिन्त्य द्रुपदः श्रद्धया भक्त्या च उपयाजस्य सेवाम् आरब्धवान्।

कदाचित् द्रुपदः सविनयम् उपयाजं नमस्कृत्य प्रार्थितवान् - "मुनीश्वर! द्रोणः मम अपमाननं कृतवान्। जीवने कदापि अहम् एतत् विस्मर्तुं न शक्नोमि। किन्तु तस्य मारणार्थं मम वा अन्यमहाराजस्य वा सामर्थ्यं नास्ति। तादृशस्य शक्तिमतः अपि द्रोणाचार्यस्य हननार्थं यः समर्थः भविष्यति, तादृशेन पुत्रेण माम् अनुगृह्णातु कृपया। भवतः साहाय्यस्य प्रतिफलरूपेण अहम् असंख्याकाः धेनूः अमूल्यानि इतरवस्तूनि च भवते दास्यामि" इति।

तदा उपयाजः अनङ्गीकारपूर्वकं शिरः चालयन् गम्भीरस्वरेण उक्तवान् - "मम तु भवतः सकाशात् कापि अपेक्षा नास्ति, अपि च अहम् एतादृश्याः अनुचितायाः अपेक्षायाः पूरणार्थं कस्यापि साहाय्यं कर्तुं न इच्छामि" इति।

उपयाजस्य एतत् वचनं श्रुत्वा अपि द्रुपदः निराशः न जातः, अपि तु पूर्वापेक्षया

द्रुपदस्य पुत्रप्राप्तिः



अपि अधिकश्रद्धया तस्य सेवां कुर्वन् दिनानि यापितवान् सः ।

वर्षम् अतीतम् । कदाचित् उपयाजः द्रुपदम् उक्तवान् - "राजन् ! यद्यपि भवान् श्रद्धया मम सेवां कृतवान्, तथापि भवतः अपेक्षां पूरयितुं न शक्नोमि अहम् । यतः भवतः अपेक्षा अनुचिता अस्ति । तथापि अहं कञ्चित् मार्गान्तरं सूचयितुं शक्नोमि । भवान् मम अग्रजं याजम् आश्रित्य, तस्य सेवां कुर्वन् तं तोषयतु । तस्मै असंख्याकाः धेनूः अर्पयतु, येन सः भवतः अपेक्षाम् अवश्यं पूरयिष्यति । यतः स्वभावतः सः आशापरः । सः कदाचित् मलिनप्रदेशे पतितम् अपि फलं खादितवान् आसीत् । गुरुकुलवाससमये अपि सः स्वच्छतापरिज्ञानं विना यत् लभ्यते, तत् खादति स्म। अतः सः भवतः अपेक्षां पूरयेत्" इति ।

उपयाजस्य वचनानुसारं द्रुपदः याजस्य आश्रमं गत्वा तं साष्टाङ्गं नमस्कृत्य तस्मै अशीतिसहस्रं धेनूः समर्पितवान्, स्वकीयाम् अपेक्षां याजं निवेदितवान् च ।

याजः द्रुपदस्य अपेक्षापूरणम् अङ्गीकृतवान् । सः अनुजस्य उपयाजस्य साहाय्येन पुत्रकामेष्टियागम् आरब्धवान् । अनन्तरं याजः होमकार्यं समाप्य हविः हस्तेन गृहीत्वा द्रुपदस्य पत्नीं कोकिलदेवीम् आहूय उक्तवान् - "एतत् हविः स्वीकरोतु, येन भवती गर्भवती सती पुत्रं पुत्रीं च प्राप्स्यति" इति ।

तदा कोकिलदेवी - "स्वामिन् ! क्षणं तिष्ठतु । इदानीम् एव स्नात्वा आगमिष्यामि" इति उक्त्वा ततः गतवती ।

"सहोदराभ्याम् आवाभ्यां सज्जीकृतम् एतत् हविः निष्प्रयोजकं भवेत् किम् ? कदापि न । भवती इच्छति चेत् आगच्छतु" इति वदन् याजः कोपेन हविः अग्नौ क्षिप्तवान् ।

अपरक्षणे एव कश्चित् योधः रथारूढः सन् अग्नितः बहिः आगतवान् । तस्य एकस्मिन् हस्ते खड्गः आसीत्, अपरस्मिन् हस्ते धनुः आसीत् । शिरः किरीटेन अलङ्कृतम् आसीत् । सः योधः अग्नितः बहिः आगत्य सिंहगर्जनं कुर्वन् ततः कुत्रचित् गतवान् । अनन्तरं तस्मात् अग्निकुण्डात् तेजस्विनी काचित् स्त्री प्रादुर्भूता । एवंप्रकारेण द्रुपदः पुत्रं

पुत्रीं च प्राप्तवान्।

एतां वार्तां श्रुत्वा पाञ्चालदेशीयाः सर्वे अतीव सन्तुष्टाः। तावता कोकिलदेवी स्नात्वा आगतवती।

कोकिलदेवी प्रवृत्तं सर्वं ज्ञात्वा अग्निकुण्डात् जन्म प्राप्तवतोः उभयोः पुत्रयोः मातृत्वेन माम् अनुगृह्णातु कृपया' इति उपयाजं याजं च सम्प्रार्थ्य वरं प्राप्तवती।

पुरोहिताः धृष्टद्युम्ननाम्ना द्रुपदस्य पुत्रस्य नामकरणं कृतवन्तः। पुत्री कृष्णवर्णीया आसीत् इत्यतः 'कृष्णा' इति तस्याः नामकरणं कृतवन्तः पुरोहिताः।

अनन्तरं द्रुपदः ब्राह्मणेभ्यः प्रभूतं धनं दत्त्वा, तान् सत्कृत्य ततः काम्पिल्यनगरं प्रतिगतवान्।

कानिचन दिनानि अतीतानि। द्रुपदः पुत्रस्य धृष्टद्युम्नस्य शस्त्राभ्यासं कारयितुम् इच्छन् तं द्रोणसमीपं प्रेषितवान्। वस्तुतः द्रोणः धृष्टद्युम्नं पाठयितुं न इच्छति स्म। किन्तु 'द्रुपदस्य पुत्रं यदि न पाठयामि, तर्हि मम अपकीर्तिः' इति विचिन्त्य द्रोणः धृष्टद्युम्नं धनुर्विद्याः पाठितवान्।

कानिचन वर्षाणि अतीतानि। द्रुपदस्य पुत्री द्रौपदी विवाहवयस्का जाता। अर्जुनाय द्रौपदी दातव्या इति द्रुपदस्य आशयः आसीत्। किन्तु पाण्डवाः लाक्षागृहे मरणं प्राप्तवन्तः इति वार्तां श्रुत्वा खिन्नः द्रुपदः स्वबान्धवान् मन्त्रिपुरोहितादीन् च आहूय तैः सह पुत्र्याः विवाहविषये समालोचनं कृतवान्।

तदा द्रुपदस्य आत्मीयः पुरोहितः कश्चित् द्रुपदम् उक्तवान् - ''महाराज! पाण्डवाः





मृताः इत्यत्र मम तु विश्वासः नास्ति । बहुभिः शुभसूचकैः ज्ञातुं शक्यते यत् ते कुत्रापि सुखेन सन्ति इति। तथापि तद्विषये चिन्तां मा करोतु भवान् । भवान् पुत्र्याः स्वयंवरम् आयोजयतु, स्वयंवरार्थं सर्वाः सिद्धताः अपि करोतु । पाण्डवाः अवश्यं स्वयंवरं प्रति आगमिष्यन्ति। स्वयंवरपद्धतिः तु क्षत्रियवंशजानां सम्प्रदायः अस्ति'' इति।

त्रीणि वर्षाणि अतीतानि । द्रुपदः पुत्र्याः द्रौपद्याः स्वयंवरम् आयोजितवान् । स्वयंवरसम्बन्धिन्यः स्पर्धाः अधिकाः न आसन् । अपि तु धनुर्विद्यास्पर्धा एका एव आसीत् ।

एकस्मिन् स्तम्भे सुवर्णनिर्मितं मत्स्ययन्त्रं योजितं, यच्च यन्त्रं निरन्तरं भ्रमत् एव भवति स्म ।

एकचक्रपुरे कुन्तीपाण्डवादयः यस्मिन् गृहे वसन्तः आसन्, तत् गृहं प्रति कदाचित् कश्चित् आगतवान् । सः उक्तवान् – ''द्रुपदः उपयाज-याजयोः सेवां कृत्वा धृष्टद्युम्ननामकं पुत्रं, कृष्णानामिकां पुत्रीं च प्राप्तवान् अस्ति। इदानीं तस्य पुत्र्याः द्रौपद्याः स्वयंवरः आयोजितः अस्ति । तदर्थं विभिन्नदेशेभ्यः राजानः काम्पिल्यनगरं गच्छन्तः सन्ति'' इति ।

एतां वार्तां श्रुत्वा 'गुरोः द्रोणाचार्यस्य संहारकः कश्चित् जन्म प्राप्तवान् अस्ति' इति ज्ञात्वा पाण्डवाः अतीव खिन्नाः । तथापि 'दैवसङ्कल्पः यथा अस्ति तथा भवेत् एव' इति चिन्तयित्वा मनसः समाधानं प्राप्तवन्तः ते ।

द्रौपद्याः स्वयंवरं प्रति गमनविषये पाण्डवानाम् अपि इच्छा आसीत् एव। पुत्राणां मनोभावं ज्ञात्वा कुन्तीदेवी युधिष्ठिरम् उक्तवती – ''वत्स ! वयं बहोः कालात् एकचक्रपुरे एव वसन्तः स्मः। इतःपरम् अपि यदि वयम् अत्रैव तिष्ठेम, तर्हि अस्माभिः भिक्षा अपि न प्राप्येत । वयं पाञ्चालदेशं गच्छाम वा ? यतः पाञ्चालदेशः सम्पद्भरितः देशः, तत्रापि काम्पिल्यनगरं नयनमनोहरम्, तत्रत्यः राजा द्रुपदः प्रजावत्सलः च इति जनाः वदन्तः सन्ति'' इति ।

युधिष्ठिरः एतद्विषये सहोदरैः सह समालोचनं कृत्वा पाञ्चालदेशगमनम्

अङ्गीकृतवान् । ते सर्वे वसतिगृहस्वामिनं नमस्कृत्य कुन्त्या सह एकचक्रपुरतः प्रस्थितवन्तः ।

पाण्डवाः अहोरात्रं प्रयाणं कुर्वन्तः कदाचित् मध्यरात्रसमये गङ्गानदीतीरस्थं 'सोमश्रव'नामकं तीर्थक्षेत्रं प्राप्तवन्तः । महान् अन्धकारः । अर्जुनः पञ्जिकां गृहीत्वा पुरोभागे गच्छन् आसीत् । इतरे तम् अनुसरन्ति स्म । गङ्गायां स्नातव्यम् इति सङ्कल्प्य पाण्डवाः गङ्गानद्यां स्नानार्थम् उद्युक्ताः । तस्मिन् समये पत्न्या सह जलक्रीडां कुर्वन् आसीत् अङ्गारपर्णनामकः गन्धर्वः । सः मानवानाम् आगमनचिह्नं ज्ञात्वा उच्चस्वरेण उक्तवान् - "के ते आगच्छन्तः सन्ति ? दूरे एव स्थीयताम् । यतः एषः प्रदेशः मदीयः । अहम् अङ्गारपर्णनामकः गन्धर्वः अस्मि । अयं समयः यक्ष-राक्षस-गन्धर्वाणां विहारसमयः अस्ति । अतः अस्मिन् समये मानवानां सञ्चारः निषिद्धः अस्ति" इति ।

एतत् वचनं श्रुत्वा अर्जुनः उक्तवान् - "अये दुष्ट ! हिमालयः गङ्गानदी च कस्यचित् एकस्य अधीने नास्ति इति किं भवान् न जानाति ? ते प्रदेशाः सर्वजनोपयोग्याः । अस्माभिः इदानीं गङ्गायां स्नात्वा एव अग्रे गम्यते" इति ।

एतस्मात् वचनात् कुपितः अङ्गारपर्णः बाणप्रयोगं कृतवान् । अर्जुनः स्वकवचसाहाय्येन अभिमुखम् आगच्छतः बाणान् निवारयन् - "हे गन्धर्व ! बाणप्रयोगेण अस्मान् मारयितुम् इच्छति खलु भवान् ? किम् अस्मान् सामान्यान् चिन्तितवान् भवान् ? मन्त्रतन्त्रादिना अपि



भवान् अस्माकं किञ्चिदपि क्लेशं जनयितुं न शक्नोति'' इति वदन् मन्त्रोच्चारपूर्वकम् आग्नेयास्त्रं प्रयुक्तवान्। परिणामतः गन्धर्वस्य रथः दग्धः जातः। अङ्गारपर्णः अधः पतित्वा मूर्च्छां गतः। एतस्मात् दुःखिता अङ्गारपर्णस्य पत्नी कुम्भीनसी युधिष्ठिरसमीपम् आगत्य तं प्रार्थितवती यत् - कृपया मम पतिम् उज्जीवयतु इति।

युधिष्ठिरः अर्जुनम् उक्तवान् - ''अङ्गारपर्णस्य पत्नी एषा कुम्भीनसी अस्मान् शरणं गता अस्ति। अतः एतस्याः पत्युः मारणम् अस्माकं धर्मः न। अतः गन्धर्वं मा मारयतु भवान्'' इति।

युधिष्ठिरस्य वचनं श्रुत्वा अर्जुनः गन्धर्वम् उज्जीवितवान्। अनन्तरं अङ्गारपर्णः अर्जुनम् उक्तवान् - ''भवतः सकाशात् अहं पराजयं प्राप्तवान् इत्यतः अहम् अङ्गारपर्णनाम्ना न जीवामि। अपि तु चित्ररथनामकं नूतनं रथं निर्माय चित्ररथनाम्ना एव जीवामि अहम्। महावीरं भवन्तं 'चाक्षुषी'नामिकां विद्यां पाठयिष्यामि, यस्याः साहाय्येन भवान् त्रिषु लोकेषु अपि कुत्र किं प्रवर्तते इति ज्ञातुं शक्नोति। गन्धर्वाः वयम् एतां विद्यां जानीमः इत्यतः एव देवताः अपि अस्माकं विरोधं न आचरन्ति। अहं भवते कांश्चन दिव्याश्वान् अपि दास्यामि। न केवलं तावत्, भवतः सर्वेभ्यः सहोदरेभ्यः अपि शतम् अश्वान् दास्यामि'' इति।

एतत् श्रुत्वा अर्जुनः उक्तवान् - ''अहं कस्मात् अपि किमपि साहाय्यं न



स्वीकरोमि'' इति।

''एवं तर्हि मह्यं किमपि दत्त्वा तस्य प्रतिफलरूपेण वा मत्तः पारितोषिकं स्वीकरोतु भवान्'' इति साग्रहं प्रार्थितवान् गन्धर्वः।

तदा अर्जुनः गन्धर्वाय आग्नेयास्त्रं दत्त्वा ततः अश्वानां स्वीकरणम् अङ्गीकृतवान्।

गन्धर्वः अर्जुनम् उक्तवान् - ''क्षत्रियाः भवन्तः भवद्भिः सह उत्तमं पुरोहितं कञ्चित् स्थापयन्तु। पुरोहितस्य वचनानुसारं व्यवहरन्ति चेत् भवतां शुभं भविष्यति'' इति।

अनन्तरम् अर्जुनः गन्धर्वम् आग्नेयास्त्रम् उपदिष्टवान्। ''सम्प्रति अश्वाः भवतः सकाशे एव भवन्तु। यदा आवश्यकता

भविष्यति, तदा तान् अश्वान् स्वीकरिष्यामि अहम्'' इति गन्धर्वम् उक्त्वा ततः गमनार्थं गन्धर्वस्य अनुज्ञां प्राप्तवान् अर्जुनः । ततः पाण्डवाः कुन्त्या सह प्रयाणम् अनुवर्तितवन्तः ।

गङ्गातीरतः प्रस्थिताः पाण्डवाः उत्कोचकतीरं प्राप्तवन्तः । तत्र धौम्यनामकः मुनिः तपः कुर्वन् आसीत् । पाण्डवाः धौम्यमुनिं सविनयं नमस्कृत्य तं प्रार्थितवन्तः यत् - भवान् अस्माकं पुरोहितः भवतु इति ।

धौम्यमुनिः पाण्डवानां बुद्धिमत्तां पराक्रमम् उत्साहं च दृष्ट्वा एते योग्याः इति विचिन्त्य सादरं तान् सत्कृतवान्, तेषाम् पौरोहित्यम् अङ्गीकृतवान् च ।

धौम्यमुनिः पौरोहित्यम् अङ्गीकृतवान् इत्यतः पाण्डवाः अतीव सन्तुष्टाः अभवन् ।

तस्मिन् समये द्रौपदीस्वयंवरस्य दर्शने उत्सुकाः केचन काम्पिल्यनगरं गन्तुम् इच्छन्तः धौम्यमुनेः आश्रममार्गेण आगतवन्तः । एतां वार्तां श्रुत्वा धौम्यमुनिना सह काम्पिल्यनगरगमनार्थं स्वकीयाम् अपेक्षां प्रकटितवन्तः पाण्डवाः ।

सामान्यवेषं धृतवतः पाण्डवान् दृष्ट्वा ते पृष्टवन्तः - ''भवन्तः कुतः आगतवन्तः ? कुत्र च गच्छन्तः सन्ति ?'' इति ।

''वयम् एकचक्रपुरतः काम्पिल्यनगरं प्रति गच्छन्तः स्मः'' इति उक्तवान् युधिष्ठिरः ।

तदा काम्पिल्यनगरं प्रति प्रस्थिताः ते उक्तवन्तः - ''वयम् अपि तत्रैव गच्छन्तः स्मः । तत्र द्रुपदस्य पुत्र्याः द्रौपद्याः स्वयंवरः प्रचलति । द्रौपदी अतीव सुन्दरी इति श्रुतम् अस्माभिः । स्वयंवरार्थं बहवः राजानः गच्छन्तः सन्ति । स्वयंवरं द्रष्टुं ये आगच्छन्ति, तेभ्यः राजा द्रुपदः गोदानं, सुवर्णदानम् अन्नदानं च करिष्यति । स्वयंवरकार्यक्रमं दृष्ट्वा भोजनादिकं च समाप्य वयं प्रत्यागमिष्यामः'' इति ।

अनन्तरं पाण्डवाः कुन्तीदेव्या सह दक्षिणपाञ्चालस्थं काम्पिल्यनगरं प्रति प्रस्थितवन्तः ।



# श्वेतचम्पकवृक्षः

अस्माभिः कदाचित् सूक्ष्मं न परिशील्यते चेदपि विविधवर्णपुष्पयुक्ताः वृक्षाः अस्माकं दृष्टिगोचराः भवन्ति। तादृशेषु वृक्षेषु श्वेतचम्पकवृक्षः अपि अन्यतमः। एतादृशाः वृक्षाः अधिकतया देवालयसमीपे भवन्ति। अतः एते 'देवालयवृक्षाः' इत्यपि उच्यन्ते। हिन्दुभिः चम्पकपुष्पाणि पूजार्थम् उपयुज्यन्ते। सामान्यतः एते वृक्षाः सर्वत्र वर्धन्ते इत्यतः बौद्धाः वदन्ति यत् - एते अमरवृक्षाः, अमरत्वसङ्केताश्च इति। श्मशानप्रदेशेषु अपि एते वृक्षाः वर्ध्यन्ते।

षड्मीटर्-उन्नतं वर्धन्ते एते वृक्षाः। वृक्षस्य शाखाः अवनताः भवन्ति। वृक्षस्य प्रधानप्रकाण्डभागः अपि किञ्चिदिव अवनतः सन् वक्रः भवति। एतस्य वृक्षस्य पर्णानां छेदनेन, वृक्षकाण्डस्य आघातेन वा क्षीरसदृशः रसः स्रवति। वृक्षशास्त्रे अयं वृक्षः 'फ्राङ्गिपानी' इति उच्यते। एतस्मात् वृक्षात् क्षीरमयः द्रवः निस्सरति इत्यतः फ्रेञ्चजनाः एतन्नाम्ना व्यवहरन्ति स्म इत्यतः, इटलीदेशस्थः कश्चित् चम्पकपुष्पसुगन्धात् सुगन्धतैलं निर्मितवान् इत्यतः वा 'फ्राङ्गिपानी' नाम्ना व्यवहारः कृतः इति च जनाः वदन्ति।

चम्पकं हिन्दीभाषया 'दाम्ली' इति 'गुलचिन्' इति च, कन्नडेन 'अरण्यचम्पकम्' इति, मराठीभाषया 'खैर्चम्प' इति, आस्सामीभाषया 'गोलम्बी' इति, तमिळुभाषया 'कळ्ळिमन्दारै' इति, ओरियाभाषया 'गोलुची' इति, बङ्गालीभाषया 'गोरूर्चम्प' इति संस्कृतेन 'क्षीरचम्पकम्' इति च उच्यते। तेलुगुभाषायां एतस्य 'नुलुवरहालु' इति नामान्तरम् अपि अस्ति।

एतस्य पर्णानि विशालाकाराणि, स्थूलानि, दीर्घाणि च भवन्ति। यदा वृक्षः पुष्पितः भवति तदा अतिरमणीयतया शोभते।



एतस्य पर्णानि पुष्पाणि, वृक्षतः निस्सरन् द्रवः च विविधानाम् औषधानां निर्माणे उपयुज्यन्ते। एतस्य वृक्षस्य त्वक् चर्मव्याधिनिवारणार्थम् उपयुज्यते। अलङ्कारार्थम् अपि एते वृक्षाः वर्ध्यन्ते।

अस्माकं देशस्य ऋषयः - ४

# उद्दालकः



वेदमन्त्रान् विवरणपूर्वकं सम्यक् बोधितवत्सु अस्माकं प्राचीनेषु ऋषिश्रेष्ठेषु उद्दालकः अपि प्रमुखः। अरुणस्य पुत्रः इति कारणात् आरुणिः इत्यपि तस्य नामान्तरम् अस्ति।

आरुणिः स्वबाल्यकालात् एव श्रद्धया आसक्त्या च विद्याभ्यासं कुर्वन् गुरौ श्रद्धावान् आसीत्। सः विद्याभ्यासार्थं धौम्यमुनेः शिष्यत्वेन तस्य आश्रमे एव स्थितवान्। आश्रमात् अनतिदूरे एव काचित् नदी वाटिका च आसीत्। धौम्यमुनेः सकाशात् विद्याभ्यासं कुर्वत्सु शिष्येषु 'आरुणिः' उत्तमशिष्यत्वेन ख्यातः आसीत्।

सः श्रद्धया गुरुसेवां कुर्वन् वेदानां वेदाङ्गानां च अध्ययनार्थम् एकाग्रचित्तः सन् निरन्तरं परिश्रमं करोति स्म।

कदाचित् रात्रिसमये महती वृष्टिः आरब्धा। आश्रमात् अनतिदूरे स्थितायाः नद्याः पार्श्वे एव वाटिका आसीत्। सा वाटिका धान्यैः फलैः च समृद्धा आसीत्। यदा वृष्टिः अधिका भवति, तदा नदी जलेन पूर्णा भवति स्म। ततः जलं वाटिकां प्रविशति स्म। तस्मात् धान्यानि फलानि च नष्टानि भवन्ति इति चिन्ता आरब्धा धौम्यमुनेः। तदा आरुणिः गुरुं धौम्यमुनिं प्रार्थितवान् - "गुरुदेव! कृपया भवान् अनुमतिं ददातु। अहं वाटिकां गत्वा वाटिकायाः हानिः यथा न भवेत्, तथा व्यवस्थां करिष्यामि" इति।

गुरुः आरुणेः वचनम् अङ्गीकृतवान्।

आरुणिः वाटिकां गतवान्। वाटिकां परितः उन्नता या भित्तिः आसीत्, तां सूक्ष्मं परिशीलितवान् सः। भित्तौ एकत्र रन्ध्रम् आसीत्। रन्ध्रद्वारा जलं वाटिकां प्रविशत् आसीत्। एतत् दृष्ट्वा उद्दालकः अनतिदूरात् मृत्तिकाम् आनीय रन्ध्रे मृत्तिकापूरणपूर्वकं वाटिकां प्रति जलप्रवेशं निवारयितुं यत्नं कृतवान्। किन्तु तेन किमपि प्रयोजनं न जातम्। तेन स्थाप्यमाना मृत्तिका अपि जलेन सह गच्छति स्म इत्यतः जलप्रवाहः अधिकः

जातः । अन्ते कथञ्चित् जलप्रवाहः निरोद्धव्यः एव इति निश्चित्य सः रन्ध्रस्य अवरोधपूर्वकं शयनं कृतवान् । तस्मात् वाटिकां प्रति जलप्रवेशः स्थगितः अभवत् । किन्तु पुनरपि वृष्टिः आरब्धा । तथापि आरुणिः ततः न उत्थितवान् एव । शैत्याधिक्यकारणतः किञ्चित्कालानन्तरं सः प्रज्ञाहीनः जातः ।

वाटिकां प्रति आरुणेः गमनानन्तरं सुदीर्घः कालः अतीतः चेदपि यदा सः न प्रत्यागतः, तदा 'आरुणेः किं जातं स्यात्' इति चिन्तयन् आतङ्कम् अनुभवन् धौम्यमुनिः शिष्यैः सह वाटिकां गतवान् ।

प्रातःकालसमये धौम्यमुनिः शिष्यैः सह नदीतीरं प्राप्य तत्र रन्ध्रस्य अवरोधपूर्वकं पतितवन्तम् आरुणिं दृष्ट्वा अतीव आश्चर्यचकितः । शिष्याः मृत्तिकाम् आनीय रन्ध्रे पूरितवन्तः । धौम्यमुनिः आरुणिम् उत्थापितवान् । अनन्तरं ते आरुणिम् आश्रमं नीत्वा अग्निकुण्डसमीपे उपवेश्य तस्य उपचारं कृतवन्तः । किञ्चित्कालानन्तरम् आरुणिः सचेतनः जातः ।

गुरुः धौम्यमुनिः साभिमानम् आरुणिं पश्यन् उक्तवान् - "वत्स ! अद्य भवतः विद्याभ्यासः पूर्णतां गतः इति भवता निरूपितम् अभवत्" इति ।

आरुणिः यद्यपि वेदवेदाङ्गज्ञानी पण्डितः आसीत्, तथापि आवश्यकतायां सत्यां शरीरश्रमदायकं कार्यम् अपि करोति स्म । जनानां हितार्थं स्वप्राणान् एव त्यक्तुं सिद्धः जातः आसीत् सः । तथापि सः कदापि गर्वं न अनुभूतवान् । कर्तव्यबुद्ध्या सर्वाणि कार्याणि करोति स्म सः ।

एवम् उद्दालकनाम्ना अपि प्रख्यातः आरुणिः शिष्याणां गौरवाभिमानं सम्पाद्य स्वशिष्याणाम् अपि प्रीतिपात्रं जातः ।



# भवन्तः जानन्ति वा ?

१. 'खुजुराहो' देवालयाः भारतदेशस्य कस्मिन् राज्ये सन्ति ?
२. जलान्तर्गामी प्रथमतया केन संशोधितः ?
३. मण्डक्षीरयोः कतमम् अधिभारयुक्तम् ?
४. सिरखजनानां पवित्रग्रन्थः कः ?
५. नोबेल्पारितोषिकं प्राप्तवत्सु अत्यन्तम् अल्पवयस्कः कः ?
६. 'साल्ट्लेक्' नामकं क्रीडाङ्गणं कुत्र अस्ति ?
७. रोगग्रस्तशुनकेन दष्टानां चिकित्सार्थम् उपयुज्यमानस्य औषधस्य संशोधनं कः कृतवान् ?
८. मार्जारकुलीयानां सर्वेषां प्राणिनाम् अग्रिमपादयोः रक्षणाकवचानि भवन्ति । किन्तु एतस्य प्राणिनः तत् न भवति । सः प्राणी कः ?
९. 'दिनदर्शिनी' पद्धतिः ऐदम्प्राथम्येन केन देशेन व्यवहारपथे आनीता ?
१०. अस्माकं देशस्य सः प्रदेशः कः, यस्मिन् च प्रतिवर्षं नौकास्पर्धाः प्रचलन्ति ?
११. तत् नगरं किं, यच्च १३ द्वीपानाम् आधारेण निर्मितं सत् 'जलनगर' नाम्ना व्यवह्रियते ?
१२. प्रथमः 'पेश्वेराजः' कः ?
१३. रोम्नगरं कस्याः नद्याः तीरे अस्ति ?
१४. प्रथमा आकाशनौका का ? सा च कदा उड्डायिता ?
१५. सः 'चेस्चाम्पियन्' कः, यश्च दशभ्यः वर्षेभ्यः पूर्वं प्रपञ्चस्तरे ख्यातः आसीत् ?
१६. जतुकाः कियता वेगेन डयन्ते ?
१७. 'थाय्ल्याण्ड्' देशस्य पूवतनं नाम किम् ?
१८. 'ब्लाक् बर्ड्'नामिका पक्षिणी केन वर्णेन युक्ता भवति ?
१९. तिमिङ्गिलः वायुसेवनं विना एव जले कियन्तं कालं स्थातुं शक्नोति ?
२०. चीनादेशस्य विनिमयद्रव्यस्य नाम किम् ?

## उत्तराणि

१. मध्यप्रदेशराज्ये ।
२. कार्निलियस् वान् ड्रबेल्वर्येण ।
३. क्षीरम् ।
४. आदिग्रन्थः ।
५. विलियं लारेन्स्ब्राग्वर्यः ।
६. कलकत्तानगरे ।
७. लूयि पाश्चर्वर्यः ।
८. चित्रकः ।
९. ईजिप्टदेशेन ।
१०. केरलराज्यस्य अलेप्पीस् समीपस्थः मूण्डा ।
११. स्टाकहोम् ।
१२. बालाजी विश्वनाथः (१७१३ तः १७२० पर्यन्तं पालितवान् ।
१३. टैबर्नद्याः ।
१४. स्फुट्निक् - १ । १९५७ तमे वर्षे ।
१५. आण्टोली कार्पोव् ।
१६. प्रतिघण्टं ६० कि. मी. वेगेन ।
१७. सयाम् ।
१८. गोधूमवर्णः ।
१९. २० निमेषान् यावत् ।
२०. युवान् इति ।



# हास्योक्तिकथनम्

धनिकस्य राजारामस्य कुटिला बुद्धिः। ये सन्तोषेण जीवनं यापयन्ति, तान् पीडयन् आनन्दम् अनुभवति स्म राजारामः। पत्युः विचित्रस्वभावकारणात् तस्य पत्नी शीला अपि सर्वदा सातङ्का एव भवति स्म।

आवुत्तस्य राजारामस्य एषः विचित्रः स्वभावः शीलायाः अग्रजेन सोमशेखरेण ज्ञातः । आवुत्तः राजारामः सन्मार्गे आनेतव्यः इति चिन्तयन् सोमशेखरः कदाचित् राजारामस्य गृहं गतवान् । राजारामः सोमशेखरं सादरं स्वागतीकृत्य आत्मना केन प्रकारेण अन्येषां पीडा जनिता' इति वदन् उच्चैः हसितवान्।

एतत् श्रुत्वा सोमशेखरः - "भवतः वचनस्य श्रवणात् अपि मम हासः न भवति, अपि तु किमर्थं विना कारणं भवान् हसन् अस्ति इति आश्चर्यम् अनुभवामि । भवान् किमर्थं हसति ?" इति पृष्टवान्।

तदा राजारामः उक्तवान् - "हास्यपूर्वकं विनोदकरणम् अपि काचित् कला। सर्वे अपि अन्यान् हासयितुं न शक्नुवन्ति । श्वः प्रचलिष्यमाणां सभाम् आगच्छतु भवान्, येन मम विनोदकलां ज्ञातुं शक्ष्यति भवान्" इति।

अनन्तरदिने सोमशेखरः राजारामस्य सभां गतवान्। राजारामः काश्चन कथाः उक्तवान्। तत् श्रुत्वा सभासदः उदरोपपीडं हसितवन्तः।

एतत् श्रुत्वा आश्चर्यचकितः सोमशेखरः गृहं गत्वा प्रवृत्तं सर्वं अनुजां शीलां निवेद्य पृष्टवान् - "राजारामस्य कथायां विनोदप्रसङ्गे असति अपि सभासदः हसितवन्तः। एतस्य किं कारणम् ?" इति।

शीला दीर्घं निश्श्वस्य - "यदि ते न हसन्ति, तर्हि तैः कशाप्रहारः स्वीकरणीयः भवति" इति उक्तवती।



"किं भवत्याः पतिः महाराजः ? किं ते सभासदः कशाप्रहारं स्वीकृत्य तूष्णीं तिष्ठन्ति ?" इति साश्चर्यं पृष्टवान् सोमशेखरः।

तदा शीला उक्तवती - "ये मम पत्युः कथां श्रोतुम् आगच्छन्ति, ते सर्वे दरिद्राः। हास्यप्रसङ्गे असत्यपि तैः हसनीयम्। यतः मम पतिः तेभ्यः धनं ददाति। धनप्रभावतः एतत् सर्वं प्रचलति" इति।

अनन्तरं कदाचित् सोमशेखरः राजारामम् उक्तवान् - "विनोदः इति पदस्य अर्थम् एव न जानाति भवान् इति तु अत्यन्तं दुःखस्य विषयः। विनोदः नाम धनदानपूर्वकं जनेषु हास्योत्पादनं न, अपि तु विनोदप्रसङ्गश्रवणमात्रेण एव दुःखिताः अपि यथा हसेयुः, तथा करणम्" इति।

एतत् श्रुत्वा राजारामः - "हाँ, वस्तुस्थितिः ज्ञाता अस्ति भवता। भवतु नाम। धनं दत्त्वा अपि भवान् जनान् हासयितुं शक्नोति किम् ?" इति पृष्टवान्।

"अहं हसेयम्। किन्तु अन्यान् हासयितुं न शक्नोमि अहम्। यतः अन्येषु हास्योत्पादनं एका कला। मम ग्रामे चतुरः कश्चित् युवकः अस्ति। सः स्वचातुर्येण दुःखितान् अपि हासयति" इति उक्तवान् सोमशेखरः।

तदा राजारामः उक्तवान् - "एवं तर्हि सः अवश्यं मया द्रष्टव्यः। तम् अत्र आनाययतु" इति।

सोमशेखरस्य आह्वानम् अङ्गीकृत्य अनन्तरदिने एव चतुरः युवकः आगतवान्। राजारामः तं युवकम् उद्दिश्य - "भवान् सुलभतया जनान् हासयति, तद्विषये भवान् निपुणः इति मम श्यालः उक्तवान् अस्ति। अतः भवन्तं परीक्षितुम् इच्छन् अहं भवन्तम् आनायितवान्। परीक्षा कठिना भवति। परीक्षार्थं सिद्धः वा भवान् ?" इति पृष्टवान्।

अनुक्षणं चतुरः उच्चैः हसितवान्। युवकस्य हासम् असहमानः राजारामः पृष्टवान् - "किमर्थं भवान् हसति ?" इति।

तदा चतुरः युवकः उक्तवान् - "भवतः सम्भाषणं सर्वमपि हास्यमयं भवति इति सोमशेखरः माम् उक्तवान् आसीत्। अतः एतदपि हास्यं स्यात् इति विचिन्त्य अहं हसितवान्" इति।

चतुरस्य एतत् वचनं श्रुत्वा तत्र स्थिताः शीला इतरे कर्मकराः च उच्चैः हसितवन्तः। एतस्मात् कुपितः अपमानितः च राजारामः उक्तवान् - "अर्थहीनम् अपि वचनं श्रुत्वा यदि हस्यते तर्हि कशाप्रहारः स्वीकरणीयः भविष्यति। जागरूकाः भवन्तु" इति।

अनन्तरं सोमशेखरः राजारामम् उक्तवान् - "श्वः एव भवान् सभाम् आयोजयतु। तत्र चतुरस्य वचनश्रवणात् ये न हसन्ति, तेभ्यः अहं धनं दास्यामि। ये च हसन्ति तेभ्यः कशाप्रहारः दीयते" इति।

राजारामः एतत् अङ्गीकृतवान्।

अनन्तरं चतुरः राजारामम् उक्तवान् - "स्वामिन् ! भवत्सकाशे मम एका विज्ञापना - अहं यत्किमपि वदेयं, किन्तु भवता मौनं स्थातव्यम्" इति।

राजारामः चतुरस्य वचनम् अङ्गीकृत्य अनन्तरदिने सभाम् आयोजितवान्।

चतुरः सभासदां पुरतः वेदिकायां स्थित्वा उक्तवान् - "भोः महाजनाः ! हास्यकलया भगवान् माम् अनुगृहीतवान् अस्ति। मनसः सन्तोषः एव हासस्य कारणम् इति वदन्ति ज्ञानिनः। किन्तु कदाचित् हासकारणात् दुष्परिणामः अपि भवितुम् अर्हति। अद्यतनसभायां यदि भवन्तः हसन्ति, तर्हि भवतां द्विविधा हानिः भविष्यति - प्रथमं तावत् - भवन्तः धनं न प्राप्नुवन्ति। अपरं भवद्भिः कशाप्रहारः स्वीकरणीयः भवति। तन्नाम मम कथनं श्रुत्वा भवन्तः दुःखिताः सन्तः रोदनं कुर्वन्ति। प्रथमं हास्यं जनयित्वा अनन्तरं रोदनं कारयितुम् अहं न इच्छामि। भवन्तः न





हसन्ति, अथवा अहं भवतः सर्वान् न हासयामि इत्यतः भवन्तः यावन्तः सन्ति तावतः कशाप्रहारान् अहं स्वीकरिष्यामि । तदर्थं भवत्सु कश्चित् अग्रे आगत्य सभासदः कति सन्ति इति गणयतु'' इति ।

चतुरः सभायाम् एवं वदेत् इति कल्पना अपि न आसीत् राजारामस्य । चतुरः किमर्थम् एवं व्यवहृतवान्' इति यावत् चिन्तयन् आसीत् राजारामः, तावता सभासत्सु कश्चन कोलाहलः आरब्धः । सभासदः क्षणं यावत् मन्दस्वरेण परस्परं वार्तालापं कृत्वा उच्चैः हसितवन्तः । तेषां हासेन सभामन्दिरं प्रतिध्वनितम् अभवत् ।

एतस्मात् आश्चर्यचकितः चतुरः सभासदः उद्दिश्य पृष्टवान् - ''अहम् इतोऽपि हास्योक्तीनां कथनम् एव न आरब्धवान् । तथापि भवद्भिः हसितम् । अत्र किं कारणम् ?'' इति ।

तदा कश्चित् उत्थाय उक्तवान् - ''स्वामिन् ! यदि वयं हसामः, तर्हि अस्मासु एकैकेन एकैकः कशाप्रहारः स्वीकरणीयः भवति । एतत् अल्पं दण्डनम् अनुभोक्तुं वयं सिद्धाः । किन्तु भवान् एकः एव यदि सर्वेषाम् अपि निमित्तं कशाप्रहारान् स्वीकरोति, तर्हि तत् कष्टकरं खलु ? अतः वयं हास्योक्तिश्रवणं विना अपि हसितवन्तः'' इति ।

एतत् श्रुत्वा राजारामः मनसि एव कोपम् अनुभवन् अपि आत्मानं निगृह्य मौनम् आश्रितवान् ।

अनन्तरं चतुरः उक्तवान् - ''मानवीयता नाम का इति ज्ञापनीयम् इत्येव अहं पूर्वं तथा उक्तवान् । भवतां स्वामिनि राजारामे अपि मानवीयता अस्ति । तत्कारणात् सः मां दण्डयितुं न इच्छति । किन्तु भवतः सर्वान् अवश्यं दण्डयति एव । एकं कशाप्रहारं सोढुं भवतां सर्वेषां शक्तिः अस्ति इति इदानीं ज्ञातवान् अहम् । अतः इतःपरम् अहं निरातङ्कं हास्योक्तीः कथयिष्यामि'' इति ।

चतुरस्य वचनश्रवणमात्रेण उत्थाय - ''चतुरस्य कथनं न युक्तम् । हास्योक्तीः श्रुत्वा अपि यदि सभासदः न हसन्ति, तर्हि अहम् अवश्यं चतुरं दण्डयिष्यामि एव'' इति कोपेन वदन्तं राजरामं निवारयन् सोमशेखरः उक्तवान् - ''राजाराम ! भवता

सभायां किमपि न भाषणीयम् इति पूर्वम् एव उक्तम् आसीत् खलु चतुरेण । तं नियमं विस्मृतवान् वा भवान् ? तथापि सभासदः तु हसितवन्तः एव'' इति ।

सोमशेखरस्य वचनं श्रुत्वा राजारामः मौनम् उपविष्टवान् । अनन्तरं चतुरः राजारामविषयम् एव विनोदपूर्वकम् उक्तवान् । तस्य कथनम् एवम् आसीत् - 'जनाः यत् वदन्ति तद् एव सत्यम् इति चिन्तयति राजारामः । पूर्वं कदाचित् देवः एव प्रत्यक्षः भूत्वा 'वरं पृच्छतु' इति यदा पृष्टवान् तदा राजारामः उक्तवान् - 'मद्विषये जनानां यादृशः भावः अस्ति तादृशवरेण माम् अनुगृह्णातु' इति । तस्मात् दिनात् आरभ्य राजारामः वीथ्यां गमनसमये विना कारणम् अपि पुनः पुनः स्खलन् पतति । कण्टकवृत्तौ लग्नानि तदीयानि वस्त्राणि छिन्नानि भवन्ति सन्ति । ग्रामशुनकाः राजारामं सुदूरं धावयन्तः सन्ति । राजारामस्य वृषभौ स्वामिनं राजारामं शकटे बद्ध्वा स्वयं च शकटे उपविश्य शकटं प्रेरयन्तः सन्ति'' इति ।

एतत् श्रुत्वा सभासदः राजारामस्य अस्तित्वम् अपि विस्मृत्य उच्चैः उदरोपपीडं हसितवन्तः ।

एतस्मात् प्रकरणात् राजारामः स्वपराजयम् अङ्गीकृत्य चतुरम् उक्तवान् - ''वस्तुतः विनोदोक्तिकथनेन सर्वे अपि सन्तोषम् अनुभवन्ति । किन्तु भवतः विनोदेन अहं दुःखितः अभवम्'' इति ।

तदा चतुरः उक्तवान् - ''आत्मनः कुटिलबुद्धिं दुर्व्यवहारं च यदि स्वयं निन्दति, तर्हि सः विनोदः । तादृशविनोदश्रवणेन दुर्विनीतानां केषाञ्चित् खेदः भवति । किन्तु सज्जनाः तु सन्तोषम् एव अनुभवन्ति । तथा सन्तोषः प्राप्तव्यः चेत् मानवेन दुर्व्यवहारं परित्यज्य विनयेन व्यवहरणीयम्'' इति ।

चतुरस्य एतत् हितवचनं श्रुतवतः राजारामस्य मनसि महत् परिवर्तनं जातम् । तस्मिन् विवेकः उदितः । अनन्तरं सः चतुरं योग्यरीत्या सत्कृतवान्, सोमशेखराय कृतज्ञताः च अर्पितवान् ।





# मूर्खताफलम्

कस्मिंश्चित् ग्रामे कश्चित् काष्ठविक्रयिकः पत्न्या सह निवसति स्म । उभौ अपि परिश्रमेण कार्यं कुरुतः चेदपि तयोः जीवनं सुखदायकं तु न आसीत् ।

तयोः कुटीरात् अनतिदूरे एव केचन नागरिकाः गृहाणि निर्माय वसन्ति स्म । 'आवयोः अपेक्षया अपि सुखेन जीवनं यापयन्तः सन्ति ते' इति चिन्तयतोः काष्ठविक्रयिकस्य तस्य पत्न्याः च ईर्ष्या जाता ।

कदाचित् काष्ठविक्रयिकः तस्य पत्नी च स्वदारिद्र्यविषये एव वार्तालापं कुर्वन्तौ आस्ताम् । ''यदि आवाम् अपि धनिककुले जन्म प्राप्तवन्तौ स्याव, तर्हि सुखजीवनम् अभविष्यत् । पूर्वतनकाले देवताः वरेण अनुगृह्णन्ति स्म इति अहं श्रुतवती । काचित् देवता आवाम् अपि वरेण अनुगृह्णाति चेत् वरम् अभविष्यत्'' इति उक्तवती काष्ठविक्रयिकस्य पत्नी ।

तस्याः वचनस्य समाप्तितः पूर्वम् एव कुटीरे अकस्मात् काचित् देवता प्रत्यक्षीभूय - ''अहं वरप्रदायिनी देवता अस्मि । त्रिभिः वरैः अहं भवन्तौ अनुग्रहीतुं शक्नोमि । तावता एव भवद्भ्यां तृप्तिः अनुभोक्तव्या'' इति उक्त्वा अदृश्यतां गता ।

एतस्याः घटनातः काष्ठविक्रयिकः तत्पत्नी च आश्चर्यचकितौ सञ्जातौ । क्षणानन्तरं पत्नी उत्साहेन उक्तवती - ''आवाभ्याम् अपि सुखजीवनं यापनीयम् इति मम इच्छा । अतः आवां देवतां सम्पत्तिं प्रार्थयाव'' इति ।

पत्न्याः वचनं श्रुत्वा पतिः उक्तवान् - ''किं धनिकजीवनप्राप्तिमात्रेण रोगाः आवां न बाधन्ते ? किं चोराः सम्पत्तिं न अपहरेयुः ? अतः उत्तमम् आरोग्यं दीर्घायुः

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'

च आवाभ्यां प्रार्थनीयम्'' इति।

तदा कुपिता पत्नी - ''दीर्घायुषः प्रार्थनेन किं प्रयोजनम् ? दारिद्र्येण एव जीवनं यापनीयं चेत् दीर्घायुषः प्राप्तिः किमर्थम् ?'' इति पृष्टवती।

''भवत्याः वचनम् अपि युक्तम् एव। अतः आवाम् एतद्विषये सम्यक् विचिन्त्य एव वरं प्रार्थयाव'' इति उक्तवान् पतिः।

अनन्तरं पत्नी पाकं कर्तुं चुल्लिं ज्वालयन्ती स्वगतम् उक्तवती यत् - सम्प्रति भोजनार्थं यदि मत्स्याः स्युः तर्हि वरम् अभविष्यत् इति। अपरक्षणे एव तस्याः पुरतः केचन मत्स्याः पतिताः।

त्रिषु वरेषु एकः समाप्तः इति ज्ञात्वा कोपं निग्रहीतुम् अशक्तः पतिः उक्तवान् - ''हे मूर्खे ! कीदृशम् अकार्यम् आचरितं भवत्या ? किं वरेण आवाभ्यां मत्स्याः प्राप्तव्याः आसन् ? एते सर्वे मत्स्याः हाररूपेण भवत्याः कण्ठे भवेयुः इति प्रार्थितं चेत् एव वरम् अभविष्यत्'' इति।

अपरक्षणे एव सर्वे मत्स्याः हाररूपेण पत्न्याः कण्ठम् अलङ्कृतवन्तः।

''मां बोधयता भवता अपि एकं वरं वृथा नाशितं खलु !'' इति वदन्ती पत्नी स्वकण्ठात् मत्स्यहारस्य निष्कासनार्थं यत्नं कृतवती। किन्तु मत्स्यहारः तस्याः कण्ठे दृढं लग्नः आसीत् इत्यतः निष्कासयितुं न शक्तवती सा। पतिः अपि हारस्य निष्कासने विफलः जातः।

''हा हन्त ! सारार्थम् अपि एतेषां मत्स्यानाम् उपयोगः न शक्यः इदानीम्। यदि एतं मत्स्यहारं कण्ठात् निष्कासयितुं न शक्नोमि, तर्हि अहम् आत्महत्यां करोमि। वरः नास्ति चेदपि चिन्ता नास्ति। किन्तु एतत् अपमाननं सोढुं न शक्नोमि अहम्'' इति उक्तवती पत्नी।

अनन्यगतिकः काष्ठविक्रयिकः पत्न्याः कण्ठतः मत्स्यहारः निष्कासितः भवतु इति प्रार्थितवान्। अनुक्षणं मत्स्यहारः स्वयमेव निष्कासितः अभवत्। पतिपत्न्योः मूर्खताकारणतः त्रयः अपि वराः व्यर्थाः अभवन्।



Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!








It's time to go back to school again. Time for text books. Time for games. Time to meet old friends. And make new ones. Time to start studying again. Because there's so much to learn about the world around you.

From all of us here at Chandamama, have a great year in school. And remember to tell us what you've learnt everyday, when you come home from school !










HANDAMAMA
OLLECTION

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां अक्टोबर् - १९९५ मासे प्रकटयिष्यामः ।


A. Seethadevi


A. Seethadevi

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

### 'जून्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - **मृन्मयः घटः जागरूकतया उपयोक्तव्यः ।**

द्वितीयचित्रम् - **कायरूपी घटः परिशुभ्रतया रक्षणीयः ।**

प्रेषकः - श्री पि. वि. नागब्रह्मम्, बेतनी पेट मार्गः, भीमवरम् - ५३४२०१ (आ.प्र.)

---


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ६०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**

आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु

**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

## आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए

समुद्री जहाज़ से रु. 117.00  वायु सेवा से रु. 264.00

## फ्रान्स, सिंगापुर, यू.के., यू.एस.ए., पश्चिम जर्मनी और दूसरे देशों के लिए

समुद्री जहाज़ से रु. 123.00  वायु सेवा से रु. 264.00

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.